मण्डेन वा पिबेत्प्रातश्चूर्णान्यन्नस्य वा पुरः ।
चूर्णानि मातुलुङ्गस्य भावितान्यसकृद्रसे ।
कुर्वीत कार्मुकतरान् वटकान् कफवातयोः ॥ ३० ॥

हिङ्गुवचाविजयापशुगन्धा-
दाडिमदीप्यकधान्यकपाठाः ।
पुष्करमूलशठीहपुषाग्नि-
क्षारयुगत्रिपटुत्रिकटूनि ॥ ३१ ॥

साजाजिचव्यं सहतिन्तिडीकं
सवेतसाम्लं विनिहन्ति चूर्णम् ।
हृत्पार्श्वबस्तित्रिकयोनिपायु-
शूलानि वाय्वामकफोद्भवानि ॥ ३२ ॥

कृच्छ्रान् गुल्मान्वातविण्मूत्रसङ्गं
कण्ठे बन्धं हृद्ग्रहं पाण्डुरोगम् ।
अन्नाश्रद्धाप्लीहदुर्नामहिध्मा-
वध्माध्मानश्वासकासाग्निसादान् ॥ ३३ ॥

लवणयवानीदीप्यक-
कणनागरमुत्तरोत्तरं वृद्धम् ।
सर्वसमानहरीतकि-
चूर्णं वैश्वानरः साक्षात् ॥ ३४ ॥

त्रिकटुकमजमोदा सैन्धवं जीरके द्वे
समधरणधृतानामष्टमो हिङ्गुभागः ।

१ 'समांशह' इति पाठः.

प्रथमकवलभोज्यः सर्पिषा चूर्णकोऽयं
जनयति जठराग्निं[1] वातगुल्मं निहन्ति ॥ ३५ ॥
हिङ्गुग्राविडशुण्ठ्यजाजिविजयावाट्याभिधानामयै-
श्चूर्णः कुम्भनिकुम्भमूलसहितैर्भागोत्तरं वर्धितैः।
पीतः कोष्णजलेन कोष्ठजरुजो गुल्मोदरादीनयं
शार्दूलः प्रसभं प्रमथ्य हरति व्याधीन् मृगाघानिव ॥३६॥
सिन्धूत्थपथ्याकणदीप्यकानां
चूर्णानि तोयैः पिबतां कवोष्णैः।
प्रयाति नाशं कफवातजन्मा
नाराचनिर्भिन्न इवामयौघः ॥ ३७ ॥
पूतीकपत्रगजचिर्भटचव्यवह्नि-
व्योषं च संस्तरचितं लवणोपधानम्।
दग्ध्वा विचूर्ण्य दधिमस्तुयुतं प्रयोज्यं
गुल्मोदरश्वयथुपाण्डुगुदोद्भवेषु ॥ ३८ ॥
हिङ्गुत्रिगुणं सैन्धवमस्मात्त्रिगुणं तु तैलमैरण्डम्।
तत्त्रिगुणरसोनरसं गुल्मोदरवर्ध्मशूलघ्नम् ॥ ३९ ॥
मातुलुङ्गरसो हिङ्गु दाडिमं बिडसैन्धवम्।
सुरामण्डेन पातव्यं वातगुल्मरुजापहम् ॥ ४० ॥
शुण्ठ्याः कर्षं गुडस्य द्वौ धौतात्कृष्णतिलात्पलम्।
खादन्नेकत्र सञ्चूर्ण्य कोष्णक्षीरानुपो जयेत् ॥ ४१ ॥
वातहृद्रोगगुल्मार्शोयोनिशूलशकृद्ग्रहान्।

---

१ 'भृशमग्निं' इति पाठः.

पिबेदेरण्डतैलं तु वातगुल्मी प्रसन्नया ॥ ४२ ॥
श्लेष्मण्यनुबले वायौ पित्ते तु पयसा सह ।
विबद्धं यदि वा पित्तं सन्तापं वातगुल्मिनः ॥ ४३ ॥
कुर्याद्विरेचनीयोऽसौ सस्नेहैरानुलोमिकैः ।
तापानुवृत्तावेवं च रक्तं तस्याऽवसेचयेत् ॥ ४४ ॥
साधयेच्छुद्धशुष्कस्य लशुनस्य चतुःपलम् ।
क्षीरोदकेऽष्टगुणिते क्षीरशेषं च पाचयेत् ॥ ४५ ॥
वातगुल्ममुदावर्तं गृध्रसीं विषमज्वरम् ।
हृद्रोगं विद्रधिं शोषं साधयत्याशु तत्पयः ॥ ४६ ॥
तैलं प्रसन्नागोमूत्रमारनालं यवाग्रजः ।
गुल्मं जठरमानाहं पीतमेकत्र साधयेत् ॥ ४७ ॥
चित्रकग्रन्थिकैरण्डशुण्ठीक्वाथः परं हितः ।
शूलानाहविबन्धेषु सहिङ्गुबिडसैन्धवः ॥ ४८ ॥
पुष्करैरण्डयोर्मूलं यवधन्वयवासकम् ।
जलेन क्वथितं पीतं कोष्ठदाहरुजापहम् ॥ ४९ ॥
वाट्याह्वैरण्डदर्भाणां मूलं दारु महौषधम् ।
पीतं निःक्वाथ्य तोयेन कोष्ठपृष्ठांसशूलजित् ॥ ५० ॥
शिलाजं पयसाऽनल्पपञ्चमूलशृतेन वा ।
वातगुल्मी पिबेद्वाट्यमुदावर्ते तु भोजयेत् ॥ ५१ ॥
स्निग्धं पैप्पलिकैर्यूषैर्मूलकानां रसेन वा ।
बद्धविण्मारुतोऽश्नीयात्क्षीरेणोष्णेन यावकम् ॥ ५२ ॥

कुल्माषान्वा बहुस्नेहान् भक्षयेल्लवणोत्तरान् ।
नीलिनीत्रिवृतादन्तीपथ्याकम्पिल्लकैः सह ॥ ५३ ॥
समलाय घृतं देयं सबिडक्षारनागरम् ।
नीलिनीं त्रिफलां रास्नां बलां कटुकरोहिणीम् ॥ ५४ ॥
पचेद्विडङ्गं व्याघ्रीं च पालिकानि जलाढके ।
रसेऽष्टभागशेषे तु घृतप्रस्थं विपाचयेत् ॥ ५५ ॥
दध्नः प्रस्थेन संयोज्य सुधाक्षीरपलेन च ।
ततो घृतपलं दद्याद्यवागूमण्डमिश्रितम् ॥ ५६ ॥
जीर्णे सम्यग्विरिक्तं च भोजयेद्रसभोजनम् ।
गुल्मकुष्ठोदरव्यङ्गशोफपाण्ड्वामयज्वरान् ॥ ५७ ॥
श्वित्रं प्लीहानमुन्मादं हन्त्येतन्नीलिनीघृतम् ।
कुक्कुटाश्च मयूराश्च तित्तिरिक्रौञ्चवर्तकाः ॥ ५८ ॥
शालयो मदिराः सर्पिर्वातगुल्मचिकित्सितम् ।
हितमुष्णं द्रवं स्निग्धं भोजनं वातगुल्मिनाम् ॥ ५९ ॥
समण्डावारुणीपानं तप्तं वा धान्यकैर्जलम् ।
स्निग्धोष्णेनोदिते गुल्मे पैत्तिके स्रंसनं हितम् ॥ ६० ॥
द्राक्षाऽभयागुडरसं कम्पिल्लं वा मधुद्रुतम् ।
रूक्षोष्णे रक्तपित्तोक्तं

गुल्मे रूक्षोष्णजे पुनः ॥ ६१ ॥
परं संशमनं सर्पिस्तिक्तं वासाघृतं श्रुतम् ।
तृणाख्यपञ्चककाथे जीवनीयगणेन वा ॥ ६२ ॥

शृतं तेनैव वा क्षीरं न्यग्रोधादिगणेन वा ।
तत्राऽपि स्रंसनं युञ्ज्याच्छीघ्रमात्ययिके भिषक् ॥ ६३ ॥
वैरेचनिकसिद्धेन सर्पिषा पयसाऽपि वा ।
रसेनामलकेक्षूणां घृतप्रस्थं विपाचयेत् ॥ ६४ ॥
पथ्यापादं पिबेत्सर्पिस्तत्सिद्धं पित्तगुल्मनुत् ।
पिबेद्वा तैल्वकं सर्पिर्यच्चोक्तं पित्तविद्रधौ ॥ ६५ ॥
द्राक्षां पयस्यां मधुकं चन्दनं पद्मकं मधु ।
पिबेत्तण्डुलतोयेन पित्तगुल्मोपशान्तये ॥ ६६ ॥
द्विपलं त्रायमाणाया जलद्विप्रस्थसाधितम् ।
अष्टभागस्थितं पूतं कोष्णं क्षीरसमं पिबेत् ॥ ६७ ॥
पिबेदुपरि तस्योष्णं क्षीरमेव यथाबलम् ।
तेन निर्हृतदोषस्य गुल्मः शाम्यति पैत्तिकः ॥ ६८ ॥
दाहेऽभ्यङ्गो घृतैः शीतैः साज्यैर्लेपो हिमौषधैः ।
स्पर्शः सरोरुहां पत्रैः पात्रैश्च प्रचलज्जलैः ॥ ६९ ॥
विदाहपूर्वरूपेषु शूले वह्नेश्च मार्दवे ।
बहुशोऽपहरेद्रक्तं, पित्तगुल्मे विशेषतः ॥ ७० ॥
छिन्नमूला विदह्यन्ते न गुल्मा यान्ति च क्षयम् ।
रक्तं हि व्यम्लतां याति तच्च नास्ति न चाऽस्ति रुक् ॥७१॥
हृतदोषं परिम्लानं जाङ्गलैस्तर्पितं रसैः ।
समाश्वस्तं सशेषार्तिं सर्पिरभ्यासयेत्पुनः ॥ ७२ ॥
रक्तपित्तातिवृद्धत्वात्क्रियामनुपलभ्य वा ।

गुल्मे पाकोन्मुखे सर्वा पित्तविद्रधिवत्क्रिया ॥ ७३ ॥
शालिर्गव्याजपयसा पटोली जाङ्गलं घृतम् ।
धात्रीपरूषकं द्राक्षा खर्जूरं दाडिमं [1]सिता ॥ ७४ ॥
भोज्यं, पानेऽम्बु बलया बृहत्याद्यैश्च साधितम्, ।
श्लेष्मजे वामयेत्पूर्वमवम्यमुपवासयेत् ॥ ७५ ॥
तिक्तोष्णकटुसंसर्ग्या वह्निं सन्धुक्षयेत्ततः ।
हिङ्ग्वादिभिश्च द्विगुणक्षारहिङ्ग्वम्लवेतसैः ॥ ७६ ॥
निगूढं यदि वोन्नद्धं स्तिमितं कठिनं स्थिरम् ।
आनाहादियुतं गुल्मं संशोध्य विनयेदनु ॥ ७७ ॥
घृतं सक्षारकटुकं पातव्यं कफगुल्मिनाम् [2] ।
सव्योषक्षारलवणं सहिङ्गुविडदाडिमम् ॥ ७८ ॥
कफगुल्मं जयत्याशु दशमूलशृतं घृतम् ।
भल्लातकानां द्विपलं पञ्चमूलं पलोन्मितम् ॥ ७९ ॥
अल्पं तोयाढके साध्यं पादशेषेण तेन च ।
तुल्यं घृतं तुल्यपयो विपचेदक्षसम्मितैः ॥ ८० ॥
विडङ्गहिङ्गुसिन्धूत्थयावशूकशठीबिडैः ।
सद्वीपिरास्नायष्ट्याह्वषड्ग्रन्थाकणनागरैः ॥ ८१ ॥
एतद्भल्लातकघृतं कफगुल्महरं परम् ।
प्लीहपाण्ड्वामयश्वासग्रहणीरोगकासनुत् ॥ ८२ ॥
ततोऽस्य गुल्मे देहे च समस्ते स्वेदमाचरेत् ।
सर्वत्र गुल्मे प्रथमं स्नेहस्वेदोपपादिते ॥ ८३ ॥

---

१ 'सिताम्' इति पाठः. २ 'गुल्मिना' इति पाठः.

या क्रिया क्रियते याति सा सिद्धिं न विरूक्षिते ।
स्निग्धस्विन्नशरीरस्य गुल्मे शैथिल्यमागते ॥ ८४ ॥
यथोक्तां घटिकां न्यस्येद्गृहीतेऽपनयेच्च ताम् ।
वस्त्रान्तरं ततः कृत्वा [1]छित्त्वा गुल्मं प्रमाणवित् ॥ ८५ ॥
वि[2]मार्गाजपदादर्शैर्यथालाभं प्रपीडयेत् ।
प्रमृज्याद्गुल्ममेवैकं न त्वन्त्रहृदयं स्पृशेत् ॥ ८६ ॥
तिलैरण्डातसीबीजसर्षपैः परिलिप्य वा ।
श्लेष्मगुल्ममयःपात्रैः सुखोष्णैः स्वेदयेत्ततः ॥ ८७ ॥
एवं च विसृतं स्थानात्कफगुल्मं विरेचनैः ।
सस्नेहैर्बस्तिभिश्चैनं शोधयेद्दा[3]शमूलिकैः ॥ ८८ ॥
पिप्पल्यामलकद्राक्षाश्यामाद्यैः पालिकैः पचेत् ।
एरण्डतैलहविषोः प्रस्थौ पयसि षड्गुणे ॥ ८९ ॥
सिद्धोऽयं मिश्रकः स्नेहो गुल्मिनां स्रंसनं हितम् ।
वृद्धिविद्रधिशूलेषु वातव्याधिषु चामृतम् ॥ ९० ॥
पिबेद्वा नीलिनीसर्पिर्मात्रया द्विपलीकया ।
तथैव सुकुमाराख्यं घृतान्यौदरिकाणि वा ॥ ९१ ॥
द्रोणेऽम्भसः पचेद्दन्त्याः पलानां पञ्चविंशतिम् ।
चित्रकस्य तथा पथ्यास्तावतीस्तद्रसे स्रुते ॥ ९२ ॥
द्विप्रस्थे साधयेत्पूते क्षिपेद्दन्तीसमं गुडम् ।
तैलात्पलानि चत्वारि त्रिवृतायाश्च चूर्णतः ॥ ९३ ॥

---

१ 'छिन्द्याद्गु' पा. २ 'विमार्गः—चर्मकारशस्त्रविशेषः, 'कल्बूद' इति महाराष्ट्रभाषाप्रसिद्धश्च. ३ 'दशमूलकैः' इत्यरुणः.

कणाकर्षौ तथा शुण्ठ्याः सिद्धे लेहे तु शीतले।
मधु तैलसमं दद्याच्चतुर्जातात्चतुर्थिकाम् ॥ ९४ ॥
अतो हरीतकीमेकां सावलेहपलामदन्।
सुखं विरिच्यते स्निग्धो दोषप्रस्थमनामयः ॥ ९५ ॥
गुल्महृद्रोगदुर्नामशोफानाहगरोदरान्।
कुष्ठोत्क्लेशारुचिप्लीहग्रहणीविषमज्वरान् ॥ ९६ ॥
घ्नन्ति दन्तीहरीतक्यः पाण्डुतां च सकामलाम्।
सुधाक्षीरद्रवं चूर्णं त्रिवृतायाः सुभावितम् ॥ ९७ ॥
कार्षिकं मधुसर्पिर्भ्यां लीढ्वा साधु विरिच्यते।
कुष्ठश्यामात्रिवृद्दन्तीविजयाक्षारगुग्गुलुम् ॥ ९८ ॥
गोमूत्रेण पिबेदेकं तेन गुग्गुलुमेव वा।
निरूहान्कल्पसिद्ध्युक्तान् योजयेद्गुल्मनाशनान् ॥ ९९ ॥
कृतमूलं महावास्तुं कठिनं स्तिमितं गुरुम्।
गूढमांसं जयेद्गुल्मं क्षारारिष्टाग्निकर्मभिः ॥ १०० ॥
एकान्तरं द्व्यन्तरं वा विश्रमय्याऽथ वा त्र्यहम्।
शरीरदोषबलयोर्वर्धनक्षपणोद्यतः ॥ १०१ ॥
अर्शोऽश्मरीग्रहण्युक्ताः क्षारा योज्याः कफोल्बणे।
देवदारुत्रिवृद्दन्तीकटुकापञ्चकोलकम् ॥ १०२ ॥
स्वर्जिकायावशूकाख्यौ श्रेष्ठापाठोपकुञ्चिकाः।
कुष्ठं सर्पसुगन्धां च द्व्यक्षांशं पटुपञ्चकम् ॥ १०३ ॥
पालिकं चूर्णितं तैलवसादधिघृताप्लुतम्।

घटस्यान्तः पचेत्पक्कमग्निवर्णे घटे च तम् ॥ १०४ ॥
क्षारं गृहीत्वा क्षीराज्यतक्रमद्यादिभिः पिबेत् ।
गुल्मोदावर्तवध्मांर्शोजठरग्रहणीक्रमीन् ॥ १०५ ॥
अपस्मारगरोन्मादयोनिशुक्रामयाश्मरीः ।
क्षारागदो[1]ऽयं शमयेद्विषं चाखुभुजङ्गजम् ॥ १०६ ॥
श्लेष्माणं मधुरं स्निग्धं रसक्षीरघृताशिनः ।
छित्त्वा भित्त्वाऽऽशयं क्षारः क्षारत्वात्पातयत्यधः ॥१०७॥
मन्देऽग्नावरुचौ सात्म्यैर्मद्यैः सस्नेहमश्नताम् ।
*योजयेदासवारिष्टाग्निगदान् मार्गशुद्धये ॥ १०८ ॥*
शालयः षष्टिका जीर्णाः कुलत्था जाङ्गलं पलम् ।
चिरिबिल्वाग्नितर्कारीयवानीवरणाङ्कुराः ॥ १०९ ॥
शिग्रो[2]स्तरुणमूलानि बालं शुष्कं च मूलकम् ।
बीजपूरकहिङ्ग्वम्लवेतसक्षारदाडिमम् ॥ ११० ॥
व्योषं तक्रं घृतं तैलं भक्तं पानं तु वारुणी ।
धान्याम्लं मस्तु तक्रं च यवानीबिडचूर्णितम् ॥ १११ ॥
पञ्चमूलश्रृतं वारि जीर्णं मार्द्वीकमेव वा ।
पिप्पलीपिप्पलीमूलचित्रकाजाजिसैन्धवैः ॥ ११२ ॥
सुरा गुल्मं जयत्याशु जाङ्गलश्च विमिश्रितः ।
वमनैर्लङ्घनैः स्वेदैः सर्पिःपानैर्विरेचनैः ॥ ११३ ॥
बस्तिक्षारासवारिष्टै[3]र्गौडिमकैः पथ्यभोजनैः ।

---

१ 'क्षारोऽगदो' इति पाठः. २ 'शिग्रुस्तरुणबिल्वानि' इति पाठः. ३ 'र्गुल्मिकापै' इति पाठः.

श्लैष्मिको बद्धमूलत्वाद्यदि गुल्मो न शाम्यति ॥ ११४ ॥
तस्य दाहं हृते रक्ते कुर्यादन्ते शरादिभिः ।
अथ गुल्मं सपर्यन्तं वाससान्तरितं भिषक् ॥ ११५ ॥
नाभिबस्त्यन्त्रहृदयं रोमराजीं च वर्जयन् ।
नातिगाढं परिमृशेच्छरेण ज्वलताऽथवा ॥ ११६ ॥
लोहेनारणिकोत्थेन दारुणा तैन्दुकेन वा ।
ततोऽग्निवेगे शमिते शीतैर्व्रण इव क्रिया ॥ ११७ ॥
आमान्वये तु पेयाद्यैः सन्धुक्ष्याग्निं विलङ्घिते ।
स्वं स्वं कुर्यात्क्रमं मिश्रं मिश्रदोषे च कालवित् ॥ ११८ ॥
गतप्रसवकालायै नार्यै गुल्मेऽस्रसम्भवे ।
स्निग्धस्विन्नशरीरायै दद्यात्स्नेहविरेचनम् ॥ ११९ ॥
तिलक्काथो घृतगुडव्योषभार्ङ्गीरजोन्वितः ।
पानं रक्तभवे गुल्मे, नष्टे पुष्पे च योषितः, ॥ १२० ॥
भार्ङ्गीकृष्णाकरञ्जत्वग्ग्रन्थिकामरदारुजम् ।
चूर्णं तिलानां क्काथेन पीतं गुल्मरुजापहम् ॥ १२१ ॥
पलाशक्षारपात्रे द्वे द्वे पात्रे तैलसर्पिषोः ।
गुल्मशैथिल्यजननीं पक्त्वा मात्रां प्रयोजयेत् ॥ १२२ ॥
न प्रभिद्येत यद्येवं दद्याद्योनिविरेचनम् ।
क्षारेण युक्तं पललं सुधाक्षीरेण वा ततः ॥ १२३ ॥
ताभ्यां वा भावितान्दद्याद्योनौ कटुकमत्स्यकान् ।
वराहमत्स्यपित्ताभ्यां नक्तकान्वा सुभावितान् ॥ १२४ ॥

किण्वं वा सगुडक्षारं दद्याद्योनौ विशुद्धये ।
रक्तपित्तहरं क्षारं लेहयेन्मधुसर्पिषा ॥ १२५ ॥
लशुनं मदिरां तीक्ष्णां मत्स्यांश्चास्यै प्रयोजयेत् ।
बस्तिं सक्षीरगोमूत्रं सक्षारं दाशमूलिकम् ॥ १२६ ॥
अवर्तमाने रुधिरे हितं गुल्मप्रभेदनम् ।
यमकाभ्यक्तदेहायाः प्रवृत्ते समुपेक्षणम् ॥ १२७ ॥
रसौदनस्तथाऽऽहारः पानं च तरुणी सुरा ।
रुधिरेऽतिप्रवृत्ते तु रक्तपित्तहराः क्रियाः ॥ १२८ ॥
कार्या, वातरुगार्तायाः सर्वा वातहराः पुनः, ।
आनाहादावुदावर्तबलासघ्नौ यथायथम् ॥ १२९ ॥"

## पञ्चदशोऽध्यायः ।

अथाऽत उदरचिकित्सितं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"दोषातिमात्रोपचयात्स्रोतोमार्गनिरोधनात् ।
सम्भवत्युदरं, तस्मान्नित्यमेनं विरेचयेत् ॥ १ ॥
पाययेत्तैलमैरण्डं समूत्रं सपयोऽपि वा ।
मासं द्वौ वाथवा गव्यं मूत्रं माहिषमेव वा ॥ २ ॥
पिबेद्, गोक्षीरभुक् स्याद्वा करभीक्षीरवर्तनः ।
दाहानाहातितृण्मूर्च्छापरीतस्तु विशेषतः ॥ ३ ॥
रूक्षाणां बहुवातानां दोषसंशुद्धिकाङ्क्षिणाम् ।
स्नेहनीयानि सर्पींषि जठरघ्नानि योजयेत् ॥ ४ ॥

षट्पलं दशमूलाम्बुमस्तुद्व्याढकसाधितम्।
नागरं त्रिपलं प्रस्थं घृततैलात्तथाऽऽढकम् ॥ ५ ॥
मस्तुनः साधयित्वैतत्पिबेत्सर्वोदरापहम्।
कफमारुतसम्भूते गुल्मे च परमं हितम् ॥ ६ ॥
चतुर्गुणे जले मूत्रे द्विगुणे चित्रकात्पले।
कल्के सिद्धं घृतप्रस्थं सक्षारं जठरी पिबेत् ॥ ७ ॥
यवकोलकुलत्थानां पञ्चमूलस्य चाम्भसा।
सुरासौवीरकाभ्यां च सिद्धं वा पाययेद्घृतम् ॥ ८ ॥
एभिः स्निग्धाय सञ्जाते बले शान्ते च मारुते।
स्रस्ते दोषाशये दद्यात्कल्पेदिष्टं[१] विरेचनम् ॥ ९ ॥
पटोलमूलं त्रिफलां निशां वेल्लं च कार्षिकम्।
कम्पिल्लनीलिनीकुम्भभागान् द्वित्रिचतुर्गुणान् ॥ १० ॥
पिबेत्सञ्चूर्ण्य मूत्रेण पेयां पूर्वं ततो रसैः।
विरिक्तो जाङ्गलैरद्यात्ततः षड्दिवसं पयः ॥ ११ ॥
शृतं पिबेद्व्योषयुतं पीतमेवं पुनःपुनः।
हन्ति सर्वोदराण्येतच्चूर्णं जातोदकान्यपि ॥ १२ ॥
गवाक्षीं शङ्खिनीं दन्तीं तिल्वकस्य त्वचं वचाम्।
पिबेत्कर्कन्धुमृद्वीकाकोलाम्भोमूत्रसीधुभिः ॥ १३ ॥
यवानी हपुषा धान्यं शतपुष्पोपकुञ्चिका।
कारवी पिप्पलीमूलमजगन्धा शठी वचा ॥ १४ ॥

---

१ 'दृष्टं' इत्यरुणः.

चित्रकाजाजिकं त्र्योषं स्वर्णक्षीरी फलत्रयम् ।
द्वौ क्षारौ पौष्करं मूलं कुष्ठं लवणपञ्चकम् ॥ १५ ॥
विडङ्गं च समांशानि दन्त्या भागत्रयं तथा ।
त्रिवृद्विशाले द्विगुणे सातला च चतुर्गुणा ॥ १६ ॥
एष नारायणो नाम चूर्णो रोगगणापहः ।
नैनं प्राप्याभिवर्धन्ते रोगा विष्णुमिवासुराः ॥ १७ ॥
तक्रेणोदरिभिः पेयो गुल्मिभिर्बदराम्बुना ।
आनाहवाते सुरया वातरोगे प्रसन्नया ॥ १८ ॥
दधिमण्डेन विट्सङ्गे दाडिमाम्भोभिरर्शसैः ।
परिकर्ते सवृक्षाम्लैरुष्णाम्बुभिरजीर्णके ॥ १९ ॥
भगन्दरे पाण्डुरोगे कासे श्वासे गलग्रहे ।
हृद्रोगे ग्रहणीदोषे कुष्ठे मन्देऽनले ज्वरे ॥ २० ॥
दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे ।
यथार्हं स्निग्धकोष्ठेन पेयमेतद्विरेचनम् ॥ २१ ॥
हपुषां काञ्चनक्षीरीं त्रिफलां नीलिनीफलम् ।
त्रायन्तीं रोहिणीं तिक्तां सातलां त्रिवृतां वचाम् ॥ २२ ॥
सैन्धवं काललवणं पिप्पलीं चेति चूर्णयेत् ।
दाडिमत्रिफलामांसरसमूत्रसुखोदकैः ॥ २३ ॥
पेयोऽयं सर्वगुल्मेषु प्लीह्नि सर्वोदरेषु च ।
श्वित्रे कुष्ठेष्वजरके सदने विषमेऽनले ॥ २४ ॥
शोफार्शःपाण्डुरोगेषु कामलायां हलीमके ।
वातपित्तकफांश्चाशु विरेकेण प्रसाधयेत् ॥ २५ ॥

नीलिनीं निचुलं व्योषं क्षारो लवणपञ्चकम् ।
चित्रकं च पिबेच्चूर्णं सर्पिषोदरगुल्मनुत् ॥ २६ ॥
पूर्ववच्च पिबेद्दुग्धं क्षामः शुद्धोऽन्तरान्तरा ।
कारभं गव्यमाजं वा दद्यादात्ययिके गदे ॥ २७ ॥
स्नेहमेव विरेकार्थं दुर्बलेभ्यो विशेषतः ।
हरीतकीसूक्ष्मरजःप्रस्थयुक्तं घृताढकम् ॥ २८ ॥
अग्नौ विलाप्य मथितं खजेन यवपल्लके ।
निधापयेत्ततो मासादुद्धृतं गालितं पचेत् ॥ २९ ॥
हरीतकीनां क्वाथेन दध्ना चाम्लेन संयुतम् ।
उदरं गरमष्ठीलामानाहं गुल्मविद्रधिम् ॥ ३० ॥
हन्त्येतत्कुष्ठमुन्मादमपस्मारं च पानतः ।
स्नुक्क्षीरयुक्ताद्गोक्षीराच्छृतशीतात्खजाहतात् ॥ ३१ ॥
यज्जातमाज्यं स्नुक्क्षीरसिद्धं तच्च तथागुणम् ।
क्षीरद्रोणं सुधाक्षीरप्रस्थार्धेन युतं दधि ॥ ३२ ॥
जातं मथित्वा तत्सर्पिस्त्रिवृत्सिद्धं च तद्गुणम् ।
तथा सिद्धं घृतप्रस्थं पयस्यष्टगुणे पिबेत् ॥ ३३ ॥
स्नुक्क्षीरपलकल्केन त्रिवृताषट्पलेन च ।
एषां चाऽनु पिबेत्पेयां रसं स्वादु पयोऽथवा ॥ ३४ ॥
घृते जीर्णे विरिक्तश्च कोष्णं नागरसाधितम् ।
पिबेदम्बु ततः पेयां ततो यूषं कुलत्थजम् ॥ ३५ ॥
पिबेद्रूक्षस्त्र्यहं त्वेवं भूयो वा प्रतिभोजितः ।

१ 'वाप्रतिभो' इति क्वचित्.

पुनः पुनः पिबेत्सर्पिरानुपूर्व्याऽनयैव च ॥ ३६ ॥
घृतान्येतानि सिद्धानि विदध्यात्कुशलो भिषक् ।
गुल्मानां गरदोषाणामुदराणां च शान्तये ॥ ३७ ॥
पीलुकल्कोपसिद्धं वा घृतमानाहभेदनम् ।
तैल्वकं नीलिनीसर्पिः स्नेहं वा मिश्रकं पिबेत् ॥ ३८ ॥
हृतदोषः क्रमादश्नन् लघुशाल्योदनं प्रति ।
उपयुञ्जीत जठरी दोषशेषनिवृत्तये ॥ ३९ ॥
हरीतकीसहस्रं वा गोमूत्रेण पयोऽनुपः ।
सहस्रं पिप्पलीनां वा स्नुक्क्षीरेण सुभावितम् ॥ ४० ॥
पिप्पलीं वर्धमानां वा क्षीराशी वा शिलाजतु ।
तद्वद्वा गुग्गुलुं क्षीरं तुल्यार्द्रकरसं तथा ॥ ४१ ॥
चित्रकामरदारुभ्यां कल्कं क्षीरेण वा पिबेत् ।
मासं युक्तस्तथा हस्तिपिप्पलीविश्वभेषजम् ॥ ४२ ॥
विडङ्गं चित्रको दन्ती चव्यं व्योषं च तैः पयः ।
कल्कैः कोलसमैः पीत्वा प्रवृद्धमुदरं जयेत् ॥ ४३ ॥
भोज्यं भुञ्जीत वा मासं स्नुहीक्षीरघृतान्वितम् ।
उत्कारिकां वा स्नुक्क्षीरपीतपथ्याकणाकृताम् ॥ ४४ ॥
पार्श्वशूलमुपस्तम्भं हृद्ग्रहं च समीरणः ।
यदि कुर्यात् ततस्तैलं बिल्वक्षारान्वितं पिबेत् ॥ ४५ ॥
पक्वं च टिण्टुकबलापलाशतिलनालजैः ।
क्षारैः कदल्यपामार्गतर्कारीजैः पृथक्कृतैः ॥ ४६ ॥

कफे वातेन पित्ते वा ताभ्यां वाऽप्यावृतेऽनिले।
बलिनः स्वौषधयुतं तैलमेरण्डजं हितम्॥ ४७॥
देवदारुपलाशार्कहस्तिपिप्पलिशिग्रुकैः।
साश्वकर्णैः सगोमूत्रैः प्रदिह्यादुदरं बहिः॥ ४८॥
वृश्चिकालीवचाशुण्ठीपञ्चमूलपुनर्नवात्।
वर्षाभूधान्यकुष्ठाच्च क्वाथैर्मूत्रैश्च सेचयेत्॥ ४९॥
विरिक्तं म्लानमुदरं स्वेदितं साल्वणादिभिः।
वाससा वेष्टयेदेवं वायुर्नाऽऽध्मापयेत्पुन.॥ ५०॥
सुविरिक्तस्य यस्य स्यादाध्मानं पुनरेव तम्।
सुस्निग्धैरम्ललवणैर्निरूहैः समुपाचरेत्॥ ५१॥
सोपस्तम्भोऽपि वा वायुराध्मापयति यं नरम्।
तीक्ष्णाः सक्षारगोमूत्राः शस्यन्ते तस्य बस्तयः॥ ५२॥
इति सामान्यतः प्रोक्ताः सिद्धा जठरिणां क्रियाः।
वातोदरेऽथ बलिनं विदार्यादिश्टतं घृतम्॥ ५३॥
पाययेत्तु ततः स्निग्धं स्वेदिताङ्गं विरेचयेत्।
बहुशस्तैल्वकेनैनं सर्पिषा मिश्रकेण वा॥ ५४॥
कृते संसर्जने क्षीरं बलार्थमवचारयेत्।
प्रागुत्क्लेशान्निवर्तेत बले लब्धे क्रमात्पयः॥ ५५॥
यूषै रसैर्वा मन्दाम्ललवणैरेधितानलम्।
सोदावर्तं पुनः स्निग्धं स्विन्नमास्थापयेत्ततः॥ ५६॥

१ 'साल्वलादि' इलक्षणः.

तीक्ष्णाऽधोभागयुक्तेन दाशमूलिकबस्तिना ।
तिलोरुबूकतैलेन वातघ्नाम्लश्टतेन च ॥ ५७ ॥
स्फुरणाक्षेपसन्ध्यस्थिपार्श्वपृष्ठत्रिकार्तिषु ।
रूक्षं बद्धशकृद्वातं दीप्ताग्निमनुवासयेत् ॥ ५८ ॥
अविरेच्यस्य शमना बस्तिक्षीरघृतादयः ।
बलिनं स्वादुसिद्धेन पैत्ते संस्नेह्य सर्पिषा ॥ ५९ ॥
श्यामात्रिभण्डीत्रिफलाविपक्केन विरेचयेत् ।
सितामधुघृताढ्येन निरूहोऽस्य ततो हितः ॥ ६० ॥
न्यग्रोधादिकषायेण स्नेहबस्तिश्च तच्छृतः ।
दुर्बलं त्वनुवास्यादौ शोधयेत्क्षीरबस्तिभिः ॥ ६१ ॥
जाते त्वग्निबले स्निग्धं भूयो भूयो विरेचयेत् ।
क्षीरेण सत्रिवृत्कल्केनोरुबूकश्टतेन तम् ॥ ६२ ॥
सातलात्रायमाणाभ्यां श्टतेनाऽऽरग्वधेन वा ।
सकफे वा समूत्रेण सतिक्ताज्येन सानिले ॥ ६३ ॥
पयसान्यतमेनैषां विदार्यादिश्टतेन वा ।
भुञ्जीत, जठरं चाऽस्य पायसेनोपनाहयेत् ॥ ६४ ॥
पुनः क्षीरं पुनर्बस्तिं पुनरेव विरेचनम् ।
क्रमेण ध्रुवमातिष्ठन् यतः पित्तोदरं जयेत् ॥ ६५ ॥
वत्सकादिविपक्केन कफे संस्नेह्य सर्पिषा ।
स्विन्नं स्नुक्क्षीरसिद्धेन बलवन्तं विरेचितम् ॥ ६६ ॥
संसर्जयेत्कटुक्षारयुक्तैरन्नैः कफापहैः ।

मूत्रत्र्यूषणतैलाढ्यो निरूहोऽस्य ततो हितः ॥ ६७ ॥
मुष्ककादिकषायेण स्नेहबस्तिश्च तच्छृतः।
भोजनं त्र्योषदुग्धेन कौलत्थेन रसेन वा ॥ ६८ ॥
स्तैमित्यारुचिहृल्लासैर्मन्देऽग्नौ मद्यपाय च।
दद्यादरिष्टान् क्षारांश्च कफस्त्यानस्थिरोदरे ॥ ६९ ॥
हिङ्गूपकुल्ये त्रिफलां देवदारु निशाद्वयम्।
भल्लातकं शिग्रुफलं कटुकां तिक्तकं वचाम् ॥ ७० ॥
शुण्ठीं मार्ङ्गीं घनं कुष्ठं सरलं पटुपञ्चकम्।
दाहयेज्जर्जरीकृत्य दधिस्नेहचतुष्कवत् ॥ ७१ ॥
अन्तर्धूमं ततः क्षाराद्बिडालपदकं पिबेत्।
मदिरादधिमण्डोष्णजलारिष्टसुरासवैः ॥ ७२ ॥
उदरं गुल्ममष्ठीलां तून्यौ शोफं विषूचिकाम्।
प्लीहहृद्रोगगुदजानुदावर्तं च नाशयेत् ॥ ७३ ॥
जयेदरिष्टगोमूत्रचूर्णायस्कृतिपानतः।
सक्षारतैलपानैश्च दुर्बलस्य कफोदरम् ॥ ७४ ॥
उपनाह्यं ससिद्धार्थकिण्वैर्बीजैश्च मूलकात्।
कल्कितैरुदरस्वेदमभीक्ष्णं चाऽत्र योजयेत् ॥ ७५ ॥
सन्निपातोदरे कुर्यान्नातिक्षीणबलानले।
दोषोद्रेकानुरोधेन प्रत्याख्याय क्रियामिमाम् ॥ ७६ ॥
दन्तीद्रवन्तीफलजं तैलं पाने च शस्यते।
क्रियानिवृत्ते जठरे त्रिदोषे तु विशेषतः ॥ ७७ ॥

दद्यादापृच्छ्य तज्ज्ञानीन्[1] पातुं मद्येन कल्कितम् ।
मूलं काकादनीगुञ्जाकरवीरकसम्भवम् ॥ ७८ ॥
पानभोजनसंयुक्तं दद्याद्वा स्थावरं विषम् ।
यस्मिन्वा कुपितः सर्पो विमुञ्चति फले विषम् ॥ ७९ ॥
तेनास्य दोषसङ्घातः स्थिरो लीनो विमार्गगः ।
बहिः प्रवर्तते भिन्नो विषेणाशु प्रमाथिना ॥ ८० ॥
तथा व्रजत्यगदतां शरीरान्तरमेव वा ।
हृतदोषं तु शीताम्बुस्नातं तं पाययेत्पयः ॥ ८१ ॥
पेयां वा त्रिवृतः शाकं मण्डूक्या वास्तुकस्य वा ।
कालशाकं यवाख्यं वा खादेत्स्वरससाधितम् ॥ ८२ ॥
निरम्ललवणस्नेहं स्विन्नास्विन्नमनन्नभुक् ।
मासमेकं ततश्चैवं तृषितः स्वरसं पिबेत् ॥ ८३ ॥
एवं विनिर्हृते शाकैर्दोषे मासात् परं ततः ।
दुर्बलाय प्रयुञ्जीत प्राणभृत्कारभं पयः ॥ ८४ ॥
प्लीहोदरे यथादोषं स्निग्धस्य स्वेदितस्य च ।
सिरां भुक्तवतो दध्ना वामबाहौ विमोक्षयेत् ॥ ८५ ॥
लब्धे बले च भूयोऽपि स्नेहपीतं विशोधितम् ।
समुद्रशुक्तिजं क्षारं पयसा पाययेत्तथा ॥ ८६ ॥
अम्लस्रुतं[2] विडकणाचूर्णाढ्यं नक्तमालजम् ।
सोभाञ्जनस्य वा क्वाथं सैन्धवाग्निकणान्वितम् ॥ ८७ ॥
हिङ्ग्वादिचूर्णक्षाराढ्यं युञ्जीत च यथाबलम् ।

---

१ 'तज्जातीन्' इति पाठः. २ 'शृतं' इति पाठः.

पिप्पली नागरं दन्ती समांशं द्विगुणाभयम् ॥ ८८ ॥
विडार्धांशयुतं चूर्णमिदमुष्णाम्बुना पिबेत् ।
विडङ्गं चित्रकं सक्तून् सघृतान् सैन्धवं वचाम् ॥ ८९ ॥
दग्ध्वा कपाले पयसा गुल्मप्लीहापहं पिबेत् ।
तैलोन्मिश्रैर्बदरकपत्रैः संमर्दितैः समुपनद्धः ।
मुशलेन पीडितोऽनु याति प्लीहा पयोभुजो नाशम्॥९०॥
रोहीतकलताः कृत्ताः खण्डशः साभया जले ।
मूत्रे वाऽऽसुनुयात्तत्तु सप्तरात्रस्थितं पिबेत् ॥ ९१ ॥
कामलाप्लीहगुल्मार्शःकृमिमेहोदरापहम् ।
रोहीतकत्वचः कृत्वा[1] पलानां पञ्चविंशतिम् ॥ ९२ ॥
कोलद्विप्रस्थसंयुक्तं कषायमुपकल्पयेत् ।
पालिकैः पञ्चकोलैस्तु तैः समस्तैश्च तुल्यया ॥ ९३ ॥
हरीतकीत्वचा पिष्टैर्घृतप्रस्थं विपाचयेत् ।
प्लीहाभिवृद्धिं शमयत्येतदाशु प्रयोजितम् ॥ ९४ ॥
कदल्यास्तिलनालानां क्षारेणेक्षुरकस्य[2] च ।
तैलं पक्वं जयेत्पानात्प्लीहानं कफवातजम् ॥ ९५ ॥
अशान्तौ गुल्मविधिना योजयेदग्निकर्म च ।
अम्लास्यपिच्छासलिले प्लीह्नि वातकफोल्बणे ॥ ९६ ॥
पैत्तिके जीवनीयानि सर्पींषि क्षीरबस्तयः ।
रक्तावसेकः संशुद्धिः क्षीरपानं च शस्यते ॥ ९७ ॥
यकृति प्लीहवत्कर्म दक्षिणे तु भुजे सिराम् ।

---

१ 'कृत्वा' इति पाठः. २ 'क्षारेण क्षु' इति अरुणः.

स्विन्नाय बद्धोदरिणे मूत्रतीक्ष्णौषधान्वितम् ॥ ९८ ॥
सतैललवणं दद्यान्निरूहं सानुवासनम् ।
परिस्रंसीनि चान्नानि तीक्ष्णं चास्मै विरेचनम् ॥ ९९ ॥
उदावर्तहरं कर्म कार्यं यच्चानिलापहम् ।
छिद्रोदरमृते स्वेदाच्छ्लेष्मोदरवदाचरेत् ॥ १०० ॥
जातं जातं जलं स्राव्यमेवं तद्यापयेद्भिषक् ।
अपां दोषहराण्यादौ योजयेदुदकोदरे ॥ १०१ ॥
मूत्रयुक्तानि तीक्ष्णानि विविधक्षारवन्ति च ।
दीपनीयैः कफघ्नैश्च तमाहारैरुपाचरेत् ॥ १०२ ॥
क्षारं छागकरीषाणां स्रुतं मूत्रेऽग्निना पचेत् ।
घनीभवति तस्मिंश्च कर्षांशं चूर्णितं क्षिपेत् ॥ १०३ ॥
पिप्पलीपिप्पलीमूलं शुण्ठीलवणपञ्चकम् ।
निकुम्भकुम्भत्रिफलास्वर्णक्षीरीविषाणिकाः ॥ १०४ ॥
स्वर्जिकाक्षारयष्ट्याह्वसातलायवशूकजम् ।
कोलाभा गुटिकाः कृत्वा ततः सौवीरकाप्लुताः ॥ १०५ ॥
पिबेदजरके शोफे प्रवृद्धे चोदकोदरे ।
इत्यौषधैरप्रशमे त्रिषु बद्धोदरादिषु ॥ १०६ ॥
प्रयुञ्जीत भिषक् शस्त्रमार्तबन्धुनृपार्थितः ।
स्निग्धस्विन्नतनोर्नाभेरधो बद्धक्षताम्बयोः ॥ १०७ ॥
पाटयेदुदरं मुक्त्वा वामतश्चतुरङ्गुलात् ।
चतुरङ्गुलमानं तु निष्कास्यान्त्राणि तेन च ॥ १०८ ॥
निरीक्ष्याऽपनयेद्वालमललेपोपलादिकम् ।

छिद्रे तु शल्यमुद्धृत्य विशोध्यान्त्रं परिस्रवम् ॥ १०९ ॥
मर्कोटैर्दंशयेच्छिद्रं, तेषु लग्नेषु चाहरेत् ।
कायं मूर्ध्नोऽनु, चान्त्राणि यथास्थानं निवेशयेत् ॥११०॥
अक्तानि मधुसर्पिर्भ्यामथ सीव्येद्बहिर्व्रणम् ।
ततः कृष्णमृदाऽऽलिप्य बध्नीयाद्यष्टिमिश्रया ॥ १११ ॥
निवातस्थः पयोवृत्तिः स्नेहद्रोण्यां वसेत्ततः ।
सजले जठरे तैलैरभ्यक्तस्याऽनिलापहैः ॥ ११२ ॥
स्विन्नस्योष्णाम्बुनाऽऽकक्षमुदरे परिवेष्टिते ।
बद्धच्छिद्रोदितस्थाने विध्येदङ्गुलिमात्रकम् ॥ ११३ ॥
निधाय तस्मिन्नाडीं च स्रावयेदर्धमम्भसः ।
अथाऽस्य नाडीमाकृष्य तैलेन लवणेन च ॥ ११४ ॥
व्रणमभ्यज्य बद्ध्वा च वेष्टयेद्वाससोदरम् ।
तृतीयेऽह्नि चतुर्थे वा यावदाषोडशं दिनम् ॥ ११५ ॥
तस्य विश्रम्य विश्रम्य स्रावयेदल्पशो जलम् ।
[1]निवेष्टयेद्गाढतरं जठरं[2] वाससा श्लथम् ॥ ११६ ॥
निःस्रुते लङ्घितः पेयामस्नेहलवणां पिबेत् ।
स्यात्क्षीरवृत्तिः षण्मासांस्त्रीन्पेयां पयसा पिबेत् ॥११७॥
त्रींस्त्रीऽन्यान्पयसैवाद्यात् फलाम्लेन रसेन वा ।
[3]अल्पशोऽस्नेहलवणं जीर्णं श्यामाककोद्रवम् ॥ ११८ ॥
प्रयतो वत्सरेणैवं वि[4]जयेत जलोदरम् ।

---

१ 'विवेष्टयद्गा' इति पाठः. २ 'च श्लथाश्लथम्' इति पाठः.
३ 'अल्पशः स्नेह' इति पाठः. ४ 'विजयेत्तलो' इति पाठः.

वर्ज्येषु यन्त्रितो दिष्टे नात्यदिष्टे जितेन्द्रियः ॥ ११९ ॥
सर्वमेवोदरं प्रायो दोषसङ्घातजं यतः ।
अतो वातादिशमनी क्रिया सर्वा प्रशस्यते ॥ १२० ॥
वह्निर्मन्दत्वमायाति दोषैः कुक्षौ प्रपूरिते ।
तस्माद्भोज्यानि भोज्यानि दीपनानि लघूनि च ॥ १२१ ॥
सपञ्चमूलान्यल्पाम्लपटुस्नेहकटूनि च ।
भावितानां गवां मूत्रे षष्टिकानां च तण्डुलैः ॥ १२२ ॥
यवागूं पयसा सिद्धां प्रकामं भोजयेन्नरम् ।
पिबेदिक्षुरसं चानु जठराणां निवृत्तये ॥ १२३ ॥
स्वं स्वं स्थानं व्रजन्त्येषां वातपित्तकफास्तथा ।
अत्यर्थोष्णाम्ललवणं रूक्षं ग्राहि हिमं गुरु ॥ १२४ ॥
गुडं तैलकृतं शाकं वारि पानावगाहयोः ।
आयासाध्वदिवास्वप्नयानानि च परित्यजेत् ॥ १२५ ॥
नात्यर्थसान्द्रं मधुरं तक्रं पाने प्रशस्यते ।
सकणालवणं वाते, पित्ते सोषणशर्करम्, ॥ १२६ ॥
यवानीसैन्धवाजाजीमधुव्योषैः कफोदरे, ।
त्र्यूषणक्षारलवणैः संयुतं निचयोदरे ॥ १२७ ॥
मधुतैलवचाशुण्ठीशताह्वाकुष्ठसैन्धवैः ।
प्लीह्नि, बद्धे तु हपुषायवानीपटुजाजिभिः ॥ १२८ ॥

१ 'पटुजादिभिः' इति क्वाचित्कः पाठः.

सकृष्णामाक्षिकं छिद्रे व्योषवत्सलिलोदरे ।
गौरवारोचकानाहमन्दवह्न्यतिसारिणाम् ॥ १२९ ॥
तक्रं वातकफार्तानाममृतत्वाय कल्पते ।
प्रयोगाणां च सर्वेषामनु क्षीरं प्रयोजयेत् ॥ १३० ॥
स्थैर्यकृत्सर्वधातूनां बल्यं दोषानुबन्धहृत् ।
भेषजापचिताङ्गानां क्षीरमेवामृतायते ॥ १३१ ॥"

---

## षोडशोऽध्यायः ।

अथाऽतः पाण्डुरोगचिकित्सितं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"पाण्ड्वामयी पिबेत्सर्पिरादौ कल्याणकाह्वयम् ।
पञ्चगव्यं महातिक्तं शृतं वाऽऽरग्वधादिना ॥ १ ॥
दाडिमात्कुडवो धान्यात्कुडवार्धं पलं पलम् ।
चित्रकाच्छृङ्गवेराच्च पिप्पल्यर्धपलं च तैः ॥ २ ॥
कल्कितैर्विंशतिपलं घृतस्य सलिलाढके ।
सिद्धं हृत्पाण्डुगुल्मार्शःप्लीहवातकफार्तिनुत् ॥ ३ ॥
दीपनं श्वासकासघ्नं मूढवातानुलोमनम् ।
दुःखप्रसविनीनां च वन्ध्यानां च प्रशस्यते ॥ ४ ॥
स्नेहितं वामयेत्तीक्ष्णैः पुनः स्निग्धं च शोधयेत् ।
पयसा मूत्रयुक्तेन बहुशः केवलेन वा ॥ ५ ॥

दन्तीफलरसे कोष्णे काश्मर्याञ्जलिमासुतम् ।
द्राक्षाञ्जलिं वा मृदितं तत् पिबेत् पाण्डुरोगजित् ॥ ६ ॥
मूत्रेण पिष्टां पथ्यां वा तत्सिद्धं वा फलत्रयम् ।
स्वर्णक्षीरीत्रिवृच्छ्यामाभद्रदारुमहौषधम् ॥ ७ ॥
गोमूत्राञ्जलिना पिष्टं शृतं तेनैव वा पिबेत् ।
साधितं क्षीरमेभिर्वा पिबेद्दोषानुलोमनम् ॥ ८ ॥
मूत्रे स्थितं वा सप्ताहं पयसाऽयोरजः पिबेत् ।
जीर्णे क्षीरेण भुञ्जीत रसेन मधुरेण वा ॥ ९ ॥
शुद्धश्चोभयतो लिह्यात्पथ्यां मधुघृतद्रुताम् ।
विशालां कटुकां मुस्तां कुष्ठं दारु कलिङ्गकाः ॥ १० ॥
कर्षांशा द्विपिचुर्मूर्वा कर्षार्धांशा घुणप्रिया ।
पीत्वा तच्चूर्णमम्भोभिः सुखैर्लिह्यात्ततो मधु ॥ ११ ॥
पाण्डुरोगं ज्वरं दाहं कासं श्वासमरोचकम् ।
गुल्मानाहामवातांश्च रक्तपित्तं च तज्जयेत् ॥ १२ ॥
वासागुडूचीत्रिफलाकट्वीभूनिम्बनिम्बजः ।
क्राथः क्षौद्रयुतो हन्ति पाण्डुपित्तास्रकामलाः ॥ १३ ॥

---

१ यत्तु 'दन्तीपलरसे' इति मुद्रितपुस्तकेष्वत्र पठ्यते तत्प्रामादिकम्, यतः दन्त्याः पलरसे ( पलं—४ तोलकाः) काश्मर्यादीनां पानं अतितीक्ष्णाऽऽशुकारिरेचकादिगुणवत्त्वान्न पाण्डुरोगे युक्तम् अतः हस्तलिखितपुस्तकावलब्धश्चरकसम्मतश्च 'दन्तीफलरसे' इति पाठः समीचीनः, 'फलरसे' इत्यनेन दन्तीशलाटुकरसो ग्राह्यः.

व्योषाग्निवेल्लत्रिफलामुस्तैस्तुल्यमथोरजः ।
चूर्णितं तक्रमध्वाज्यकोष्णाम्भोभिः प्रयोजितम् ॥ १४ ॥
कामलापाण्डुहृद्रोगकुष्ठार्शोमेहनाशनम् ।
गुडनागरमण्डूरतिलांशान्मानतः समान् ॥ १५ ॥
पिप्पलीद्विगुणान्दद्याद्गुटिकां पाण्डुरोगिणे ।
तार्प्यं दार्व्यास्त्वचं चव्यं ग्रन्थिकं देवदारु च ॥ १६ ॥
व्योषादिनवकं चैतच्चूर्णयेद्द्विगुणं ततः ।
मण्डूरं चाञ्जननिभं सर्वतोऽष्टगुणेऽथ तत् ॥ १७ ॥
पृथग्विपक्के गोमूत्रे वटकीकरणक्षमे ।
प्रक्षिप्य वटकान्कुर्यात्तान्खादेत्तक्रभोजनः ॥ १८ ॥
एते मण्डूरवटकाः प्राणदाः पाण्डुरोगिणाम् ।
कुष्ठान्यजरकं शोफमूरुस्तम्भमरोचकम् ॥ १९ ॥
अर्शांसि कामलां मेहान् प्लीहानं शमयन्ति च ।
ताप्याद्रिजतुरौप्यायोमलाः पञ्चपलाः पृथक् ॥ २० ॥
चित्रकत्रिफलाव्योषविडङ्गैः पालिकैः सह ।
शर्कराष्टपलोन्मिश्राश्चूर्णिता मधुना द्रुताः ॥ २१ ॥
पाण्डुरोगं विषं कासं यक्ष्माणं विषमं ज्वरम् ।
कुष्ठान्यजरकं मेहं शोफं श्वासमरोचकम् ॥ २२ ॥
विशेषाद्धन्त्यपस्मारं कामलां गुदजानि च ।
कौटजत्रिफलानिम्बपटोलघननागरैः ॥ २३ ॥
भावितानि दशाहानि रसैर्द्वित्रिगुणानि वा ।
शिलाजतुपलान्यष्टौ तावती सितशर्करा ॥ २४ ॥

त्वक्क्षीरीपिप्पलीधात्रीकर्कटाख्याः पलोन्मिताः ।
सिदिग्धयाः फलमूलाभ्यां पलं युक्त्या त्रिजातकम् ॥ २५॥
मधुत्रिपलसंयुक्तं कुर्यादक्षसमान्गुडान् ।
दाडिमाम्बुपयःपक्षिरसतोयसुरासवान् ॥ २६ ॥
तान् भक्षयित्वानु पिबेन्निरन्नो भुक्त एव वा ।
पाण्डुकुष्ठज्वरप्लीहतमकार्शोभगन्दरम् ॥ २७ ॥
हृन्मूत्रपूतीशुक्राग्निदोषशोषगरोदरम् ।
कासासृग्दरपित्तासृक्शोफगुल्मगलामयान् ॥ २८ ॥
मेहवर्ध्मभ्रमान् हन्युः सर्वदोषहराः शिवाः ।
द्राक्षाप्रस्थं कणाप्रस्थं शर्करार्धतुलां तथा ॥ २९ ॥
द्विपलं मधुकं शुण्ठीं त्वक्क्षीरीं च विचूर्णितम् ।
धात्रीफलरसद्रोणे तत्क्षिप्त्वा लेहवत्पचेत् ॥ ३० ॥
शीतान्मधुप्रस्थयुतात् लिह्यात्पाणितलं ततः ।
हलीमकं पाण्डुरोगं कामलां च नियच्छति ॥ ३१ ॥
कनीयःपञ्चमूलाम्बु शस्यते पानभोजने ।
पाण्डूनां कामलार्तानां मृद्वीकामलकाद्रसः ॥ ३२ ॥
इति सामान्यतः प्रोक्तं पाण्डुरोगभिषग्जितम् ।
विकल्प्य योज्यं विदुषा पृथग्दोषबलं प्रति ॥ ३३ ॥
स्नेहप्रायं पवनजे, तिक्तशीतं तु पैत्तिके, ।
श्लैष्मिके कटुरूक्षोष्णं, विमिश्रं सान्निपातिके, ॥ ३४ ॥
मृदं निर्यातयेत्कायात्तीक्ष्णैः संशोधनैः पुरः ।

---

१ 'भ्रम' पाठः. २ 'निर्यातये', 'निर्यापयेत्का' इति पा०.

बलाधानानि सर्पींषि शुद्धे कोष्ठे तु योजयेत् ॥ ३५ ॥
व्योषबिल्वद्विरजनीत्रिफलाद्विपुनर्नवम् ।
मुस्तान्ययोरजः पाठा विडङ्गं देवदारु च ॥ ३६ ॥
वृश्चिकाली च भार्ङ्गी च सक्षीरैस्तैः शृतं घृतम् ।
सर्वान्प्रशमयत्याशु विकारान्मृत्तिकाकृतान् ॥ ३७ ॥
तद्वत्केसरयष्ट्याह्वपिप्पलीक्षीरशाड्वलैः ।
मृद्दूषणाय[1] तल्लौल्ये वितरेद्भाविता मृदम् ॥ ३८ ॥
वेल्लाग्निनिम्बप्रसवैः पाठया मूर्वयाऽथवा ।
मृद्भेदभिन्नदोषानुगमाद्योज्यं च भेषजम् ॥ ३९ ॥
कामलायां तु पित्तघ्नं पाण्डुरोगाविरोधि यत् ।
पथ्याशतरसे पथ्यावृन्तार्धशतकल्कितः ॥ ४० ॥
प्रस्थः सिद्धो घृताद्गुल्मकामलापाण्डुरोगनुत् ।
आरग्वधं रसेनेक्षोर्विदार्यामलकस्य वा ॥ ४१ ॥
सत्र्यूषणं बिल्वमात्रं पाययेत्कामलापहम् ।
पिबेत्त्रिकुम्भकल्कं वा द्विगुणं शीतवारिणा ॥ ४२ ॥
कुम्भस्य चूर्णं सक्षौद्रं त्रैफलेन रसेन वा ।
त्रिफलाया गुडूच्या वा दार्व्या[2] निम्बस्य वा रसम् ॥४३॥
प्रातः प्रातर्मधुयुतं कामलार्ताय योजयेत् ।
शिलागैरिकधात्रीभिः कामलापहमञ्जनम् ॥ ४४ ॥
तिलपिष्टनिभं यस्तु कामलावान्सृजेन्मलम् ।

---

१ 'मृद्भेषणाय' इत्यरुणः. २ 'निशा' इति पाठः.

कफरुद्धपथं तस्य पित्तं कफहरैर्जयेत् ॥ ४५ ॥
रूक्षशीतगुरुस्वादुव्यायामबलनिग्रहैः ।
कफसम्मूर्च्छितो वायुर्यदा पित्तं बहिः क्षिपेत् ॥ ४६ ॥
हारिद्रनेत्रमूत्रत्वक्श्वेतवर्चास्तदा नरः ।
भवेत्साटोपविष्टम्भो गुरुणा हृदयेन च ॥ ४७ ॥
दौर्बल्याल्पाग्निपार्श्वार्तिहिध्माश्वासारुचिज्वरैः ।
क्रमेणाल्पेऽनुषज्येत पित्ते शाखासमाश्रिते ॥ ४८ ॥
रसैस्तं रूक्षकट्वम्लैः शिखितित्तिरिदक्षजैः ।
शुष्कमूलकजैर्यूषैः कुलत्थोत्थैश्च भोजयेत् ॥ ४९ ॥
भृशाम्लतीक्ष्णकटुकलवणोष्णं च शस्यते ।
सबीजपूरकरसं लिह्याद्व्योषं तथाशयम् ॥ ५० ॥
स्वं पित्तमेति तेनाऽस्य शकृदप्यनुरज्यते ।
वायुश्च याति प्रशमं सहाटोपाद्युपद्रवैः ॥ ५१ ॥
निवृत्तोपद्रवस्याऽस्य कार्यः कामलिको विधिः ।
गोमूत्रेण पिबेत्कुम्भकामलायां शिलाजतु ॥ ५२ ॥
मासं माक्षिकधातुं वा किट्टं चापि हिरण्यजम् ।
गुडूचीस्वरसक्षीरसाधितेन हलीमकी ॥ ५३ ॥
महिषीहविषा स्निग्धः पिबेद्धात्रीरसेन तु ।
त्रिवृतां तद्विरिक्तोऽद्यात्स्वादु पित्तानिलापहम् ॥ ५४ ॥
द्राक्षालेहं च पूर्वोक्तं सर्पींषि मधुराणि च ।
यापनान्क्षीरबस्तींश्च शीलयेत्सानुवासनान् ॥ ५५ ॥

---

१ 'बलनिग्र' इति पाठः. २ 'श्राथ' इति पाठः.

माद्वींकारिष्टयोगांश्च पिबेद्युक्त्याग्निवृद्धये।
कासिकं वाऽभयालेहं पिप्पलीमधुकं बलाम् ॥ ५६ ॥
पयसा च प्रयुञ्जीत यथादोषं यथाबलम्।
पाण्डुरोगेषु कुशलः शोफोक्तं च क्रियाक्रमम् ॥ ५७ ॥"

---

## सप्तदशोऽध्यायः।

अथाऽतः श्वयथुचिकित्सितं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः।
"सर्वत्र सर्वाङ्गसरे दोषजे श्वयथौ पुरा।
सामे विशोषितो भुक्त्वा लघु कोष्णाम्भसा पिबेत् ॥१॥
नागरातिविषादारुविडङ्गेन्द्रयवोषणम्।
अथवा विजयाशुण्ठीदेवदारुपुनर्नवम् ॥ २ ॥
नवायसं वा दोषाढ्यः शुद्धौ मूत्रहरीतकीः।
वराक्वाथेन कटुकाकुम्भायस्त्र्यूषणानि वा ॥ ३ ॥
अथवा गुग्गुलुं तद्वज्जतु वा शैलसम्भवम्।
मन्दाग्निः शीलयेदामगुरुभिन्नविबद्धविट् ॥ ४ ॥
तक्रं सौवर्चलव्योषक्षौद्रयुक्तं गुडाभयाम्।
तक्रानुपानामथवा तद्वद्वा गुडनागरम् ॥ ५ ॥
आर्द्रकं वा समगुडं प्रकुञ्चार्धविवर्धितम्।
परं पञ्चपलं मासं यूषक्षीररसाशनः ॥ ६ ॥
गुल्मोदरार्शःश्वयथुप्रमेहान्
श्वासप्रतिश्यायालसकाविपाकान्।

सकामलाशोफमनोविकारान्
कासं कफं चैव जयेत्प्रयोगः ॥ ७ ॥
घृतमार्द्रकनागरस्य कल्क-
स्वरसाभ्यां पयसा च साधयित्वा ।
श्वयथुक्षवथूदराग्निसादै-
रभिभूतोऽपि पिबन् भवत्यरोगः ॥ ८ ॥

निरामो बद्धशमलः पिबेच्छ्वयथुपीडितः ।
त्रिकटुत्रिवृतादन्तीचित्रकैः साधितं पयः ॥ ९ ॥
मूत्रं गोर्वा महिष्या वा सक्षीरं क्षीरभोजनः ।
सप्ताहं मासमथवा स्यादुष्ट्रीक्षीरवर्तनः ॥ १० ॥
यवानकं यवक्षारं यवानीं पञ्चकोलकम् ।
मरिचं दाडिमं पाठां धानकामम्लवेतसम् ॥ ११ ॥
बालबिल्वं च कर्षांशं साधयेत्सलिलाढके ।
तेन पक्वो घृतप्रस्थः शोफार्शोगुल्ममेहहा ॥ १२ ॥
दध्नश्चित्रकगर्भाद्वा घृतं तत्तक्रसंयुतम् ।
पक्वं सचित्रकं तद्वद्गुणैः
युञ्ज्याच्च कालवित् ॥ १३ ॥
धान्वन्तरं महातिक्तं कल्याणमभयाघृतम् ।
दशमूलकषायस्य कंसे पथ्याशतं पचेत् ॥ १४ ॥
दत्त्वा गुडतुलां तस्मिन् लेहे दद्याद्विचूर्णितम् ।
त्रिजातकं त्रिकटुकं किंचिच्च यवशूकजम् ॥ १५ ॥

प्रस्थार्धं च हिमे क्षौद्रात्तं निहन्त्युपयोजितम् ।
प्रवृद्धशोफज्वरमेहगुल्म-
कार्श्यामवाताम्लकरक्तपित्तम् ।
वैवर्ण्यमूत्रानिलशुक्रदोष-
श्वासारुचिप्लीहगरोदरं च ॥ १६ ॥
पुराणयवशाल्यन्नं दशमूलाम्बुसाधितम् ।
अल्पमल्पपटुस्नेहं भोजनं श्वयथोर्हितम् ॥ १७ ॥
क्षारव्योषान्वितैर्मौद्रैः कौलत्थैः सकणै रसैः ।
तथा जाङ्गलजैः कूर्मगोधाशल्यकजैरपि ॥ १८ ॥
अनम्लं मथितं पाने मद्यान्यौषधवन्ति च ।
अजाजीशठिजीवन्तीकारवीपौष्कराग्निकैः ॥ १९ ॥
बिल्वमध्ययवक्षारवृक्षाम्लैर्बदरोन्मितैः ।
कृता पेयाऽऽज्यतैलाभ्यां युक्तिभृष्टा परं हिता ॥ २० ॥
शोफातिसारहृद्रोगगुल्मार्शोऽल्पाग्निमेहिनाम् ।
गुणैस्तद्वच्च पाठायाः पञ्चकोलेन साधिता ॥ २१ ॥
शैलेयकुष्ठस्थौणेयरेणुकागुरुपद्मकैः ।
श्रीवेष्टकनखस्पृक्कादेवदारुप्रियङ्गुभिः ॥ २२ ॥
मांसीमागधिकावन्यधान्यध्यामकवालकैः ।
चतुर्जातकतालीसमुस्तागन्धपलाशकैः ॥ २३ ॥
कुर्यादभ्यञ्जने तैलं लेपं स्नानाय तूदकम् ।
स्नानं वा निम्बवर्षाभूनक्तमालार्कवारिणा ॥ २४ ॥

१ 'त्तत्' इति क्वचित्.

एकाङ्गशोफे वर्षाभूकरवीरककिंशुकैः ।
विशालात्रिफलारोध्रनलिकादेवदारुभिः ॥ २५ ॥
हिंस्राकोशातकीमाद्रीतालपर्णीजयन्तिभिः ।
स्थूलकाकादनीशालनाकुलीवृषपर्णिभिः ॥ २६ ॥
वृक्षार्द्धहस्तिकर्णैश्च सुखोष्णैर्लेपनं हितम् ।
अथाऽनिलोत्थे श्वयथौ मासार्धं त्रिवृतं पिबेत् ॥ २७ ॥
तैलमैरण्डजं वातविड्विबन्धे तदेव तु ।
प्राग्भक्तं पयसा युक्तं रसैर्वा कारयेत्तथा ॥ २८ ॥
स्वेदाभ्यङ्गान्समीरघ्नान् लेपमेकाङ्गगे पुनः ।
मातुलुङ्गाग्निमन्थेन शुण्ठीहिंस्रामराह्वयैः ॥ २९ ॥
पैत्ते तिक्तं पिबेत्सर्पिर्न्यग्रोधाद्येन वा शृतम् ।
क्षीरं, तृड्दाहमोहेषु लेपाभ्यङ्गाश्च शीतलाः ॥ ३० ॥
पटोलमूलत्रायन्तीयष्ट्याह्वकटुकाभयाः ।
दारु दार्वी हिमं दन्ती विशाला निचुलं कणा ॥ ३१ ॥
तैः क्वाथः सघृतः पीतो हन्त्यन्तस्तापतृड्भ्रमान् ।
ससन्निपातवीसर्पशोफदाहविषज्वरान् ॥ ३२ ॥
आरग्वधादिना सिद्धं तैलं श्लेष्मोद्भवे पिबेत् ।
स्रोतोविबन्धे मन्देऽग्नावरुचौ स्तिमिताशयः ॥ ३३ ॥
क्षारचूर्णासवारिष्टमूत्रतक्राणि शीलयेत् ।
कृष्णापुराणपिण्याकशिग्रुत्वक्सिकतातसीः ॥ ३४ ॥
प्रलेपोन्मर्दने युञ्ज्यात्सुखोष्णा मूत्रकल्किताः ।

स्नानं मूत्राम्भसी सिद्धे कुष्ठतर्कारिचित्रकैः ॥ ३५ ॥
कुलत्थनागराभ्यां वा चण्डागुरु विलेपने।
कालाजशृङ्गीसरलवस्तगन्धाहयाह्वयाः ॥ ३६ ॥
एकैषिका च लेपः स्याच्छ्वयथावेकगात्रगे।
यथादोषं यथासन्नं शुद्धिं रक्तावसेचनम्।
कुर्वीत मिश्रदोषे तु दोषोद्रेकबलात्क्रियाम् ॥ ३७ ॥

अजाजिपाठाघनपञ्चकोल-
 व्याघ्रीरजन्यः सुखतोयपीताः।
शोफं त्रिदोषं चिरजं प्रवृद्धं
 निघ्नन्ति भूनिम्बमहौषधे च ॥ ३८ ॥
अमृताद्वितयं शिवाटिका
 सुरकाष्ठं सपुरं सगोजलम्।
श्वयथूदरकुष्ठपाण्डुता-
 कृमिमेहोर्ध्वकफानिलापहम् ॥ ३९ ॥
इति निजमधिकृत्य पथ्यमुक्तं,
 क्षतजनिते क्षतजं विशोधनीयम्।
स्रुतिहिमघृतलेपसेकरेकै-
 र्विषजनिते विषजिच्च शोफ इष्टम् ॥ ४० ॥

(¹ग्राम्यानूपं पिशितमबलं शुष्कशाकं तिलान्नम्
 गौडं पिष्टान्नं दधि सलवणं विज्जलं मद्यमम्लम्।

---

(१) श्लोकोऽयं क्वचिन्मुद्रितपुस्तकेषु पठ्यते.

धानावल्लूरमशमनमथो गुर्वसात्म्यं विदाहि
स्वप्नं रात्रौ श्वयथुगदवान्वर्जयेन्मैथुनं च ॥ ४१ ॥")

---

## अष्टादशोऽध्यायः ।

अथाऽतो विसर्पचिकित्सितं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।
"आदावेव विसर्पेषु हितं लङ्घनरूक्षणम् ।
रक्तावसेको वमनं विरेकः स्नेहनं न तु ॥ १ ॥
प्रच्छर्दनं विसर्पघ्नं सयष्टीन्द्रयवं फलम् ।
पटोलपिप्पलीनिम्बपल्लवैर्वा समन्वितम् ॥ २ ॥
रसेन युक्तं त्रायन्त्या द्राक्षायाश्चैफलेन वा ।
विरेचनं त्रिवृच्चूर्णं पयसा सर्पिषाऽथवा ॥ ३ ॥
योज्यं कोष्ठगते दोषे विशेषेण विशोधनम् ।
अविशोध्यस्य दोषेऽल्पे शमनं चन्दनोत्पलम् ॥ ४ ॥
मुस्तनिम्बपटोलं वा पटोलादिकमेव वा ।
सारिवामलकोशीरमुस्तं वा क्वथितं जले ॥ ५ ॥
दुरालभां पर्पटकं गुडूचीं विश्वभेषजम् ।
पाक्यं शीतकषायं वा तृष्णावीसर्पवान् पिबेत् ॥ ६ ॥
दार्वीपटोलकटुकामसूरत्रिफलास्तथा ।
सनिम्बयष्टीत्रायन्तीः क्वथिता घृतमूर्च्छिताः ॥ ७ ॥
शाखादुष्टे तु रुधिरे रक्तमेवादितो हरेत् ।

त्वङ्मांसस्नायुसङ्क्लेदो रक्तक्लेदाद्धि जायते ॥ ८ ॥
निरामे श्लेष्मणि क्षीणे वातपित्तोत्तरे हितम् ।
घृतं तिक्तं महातिक्तं घृतं वा त्रायमाणया ॥ ९ ॥
निर्हृतेऽस्रे विशुद्धेऽन्तर्दोषे त्वङ्मांससन्धिगे ।
बहिःक्रियाः प्रदेहाद्याः सद्यो वीसर्पशान्तये ॥ १० ॥
शताह्वामुस्तवाराहीवंशार्तगलधान्यकम् ।
सुराह्वा कृष्णगन्धा च कुष्ठं वा लेपनं चले ॥ ११ ॥
न्यग्रोधादिगणः पित्ते तथा पद्मोत्पलादिकम् ।
न्यग्रोधपादास्तरुणाः कदलीगर्भसंयुताः ॥ १२ ॥
बिसग्रन्थिश्च लेपः स्याच्छतधौतघृताप्लुतः ।
पद्मिनीकर्दमः शीतः पिष्टं मौक्तिकमेव वा ॥ १३ ॥
शङ्खः प्रवालं शुक्तिर्वा गैरिकं वा घृतान्वितम् ।
त्रिफलापद्मकोशीरसमङ्गाकरवीरकम् ॥ १४ ॥
नलमूलान्यनन्ता च लेपः श्लेष्मविसर्पहा ।
धवसप्ताह्वखदिरदेवदारुकुरण्टकम् ॥ १५ ॥
समुस्तारग्वधं लेपो वर्गो वा वरुणादिकः ।
आरग्वधस्य पत्राणि त्वचः श्लेष्मातकोद्भवाः ॥ १६ ॥
इन्द्राणीशाककाकाह्वाशिरीषकुसुमानि च ।
सेकक्षणाभ्यङ्गहविर्लेपचूर्णान् यथायथम् ॥ १७ ॥
एतैरेवौषधैः कुर्याद्द्वार्या लेपा घृताधिकाः ।
कफस्थानगते सामे पित्तस्थानगतेऽथवा ॥ १८ ॥

अशीतोष्णा हिता रूक्षा, रक्तपित्ते घृतान्विताः ।
अत्यर्थशीतास्तनवस्तनुवस्त्रान्तरास्थिताः ॥ १९ ॥
योज्याः क्षणे क्षणेऽन्येऽन्ये, मन्दवीर्यास्त एव च, ।
संसृष्टदोषे संसृष्टमेतत्कर्म प्रशस्यते ॥ २० ॥
शतधौतघृतेनाग्निं प्रदिह्यात्केवलेन वा ।
सेचयेद्घृतमण्डेन शीतेन मधुकाम्बुना ॥ २१ ॥
शीताम्भसाम्भोजजलैः क्षीरेणेक्षुरसेन वा ।
पानलेपनसेकेषु महातिक्तं परं हितम् ॥ २२ ॥
ग्रन्थ्याख्ये रक्तपित्तघ्नं कृत्वा सम्यग्यथोदितम् ।
कफानिलघ्नं कर्मेष्टं पिण्डस्वेदोपनाहनम् ॥ २३ ॥
ग्रन्थिवीसर्पशूले तु तैलेनोष्णेन सेचयेत् ।
दशमूलविपक्वेन तद्वन्मूत्रैर्जलेन वा ॥ २४ ॥
सुखोष्णया प्रदिह्याद्वा पिष्टया कृष्णगन्धया ।
नक्तमालत्वचा शुष्कमूलकैः कलिनाऽथवा ॥ २५ ॥
दन्तीचित्रकमूलत्वक् सौधार्कपयसी गुडः ।
भल्लातकास्थिकासीसं लेपो भिन्द्याच्छिलामपि ॥ २६ ॥
बहिर्मार्गाश्रितं ग्रन्थिं किं पुनः कफसम्भवम् ।
दीर्घकालस्थितं ग्रन्थिमेभिर्भिन्द्याच्च भेषजैः ॥ २७ ॥
मूलकानां कुलत्थानां यूषैः सक्षारदाडिमैः ।
गोधूमान्नैर्यवान्नैश्च ससीधुमधुशार्करैः ॥ २८ ॥
सक्षौद्रैर्वारुणीमण्डैर्मातुलुङ्गरसान्वितैः ।

त्रिफलायाः प्रयोगैश्च पिप्पल्याः क्षौद्रसंयुतैः ॥ २९ ॥
देवदारुगुडूच्योश्च प्रयोगैर्गिरिजस्य च ।
मुस्तभल्लातसक्तूनां प्रयोगैर्माक्षिकस्य च ॥ ३० ॥
धूमैर्विरेकैः शिरसः पूर्वोक्तैर्गुल्मभेदनैः ।
ताम्रायोहेमलवणपाषाणादिप्रपीडनैः ॥ ३१ ॥
आभिः क्रियाभिः सिद्धाभिर्विविधाभिर्बले स्थितः ।
ग्रन्थिः पाषाणकठिनो यदि नैवोपशाम्यति ॥ ३२ ॥
अथास्य दाहः क्षारेण शरैर्हेम्नाऽपि वा हितः ।
पाकिभिः पाचयित्वा तु पाटयित्वा तमुद्धरेत् ॥ ३३ ॥
मोक्षयेद्बहुशश्चाऽस्य रक्तमुत्क्लेशमागतम् ।
पुनश्चापहृते रक्ते वातश्लेष्मजिदौषधम् ॥ ३४ ॥
प्रक्लिन्ने दाहपाकाभ्यां बाह्यान्तर्व्रणवत्क्रिया ।
दार्वीविडङ्गकम्पिल्लैः सिद्धं तैलं व्रणे हितम् ॥ ३५ ॥
दूर्वास्वरससिद्धं तु कफपित्तोत्तरे घृतम् ।
एकतः सर्वकर्माणि रक्तमोक्षणमेकतः ॥ ३६ ॥
विसर्पो ह्यसंसृष्टः सोऽस्रपित्तेन जायते ।
रक्तमेवाश्रयश्चास्य बहुशोऽस्रं हरेदतः ॥ ३७ ॥
न घृतं बहु दोषाय देयं यन्न विरेचनम् ।
तेन दोषो ह्युपस्तब्धस्त्वग्रक्तपिशितं पचेत् ॥ ३८ ॥"

## एकोनविंशोऽध्यायः ।

अथाऽतः कुष्ठचिकित्सितं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ॥
"कुष्ठिनं स्नेहपानेन पूर्वं सर्वमुपाचरेत् ।
तत्र वातोत्तरे तैलं घृतं वा साधितं हितम् ॥ १ ॥
दशमूलामृतैरण्डशार्ङ्गेष्टामेषशृङ्गिभिः ।
पटोलनिम्बकटुकादार्वीपाठादुरालभाः ॥ २ ॥
पर्पटं त्रायमाणां च पलांशं पाचयेदपाम् ।
द्व्याढकेऽष्टांशशेषेण तेन कर्षोन्मितैस्तथा ॥ ३ ॥
त्रायन्तीमुस्तभूनिम्बकलिङ्गकणचन्दनैः ।
सर्पिषो द्वादशपलं पचेत्तत्तिक्तकं जयेत् ॥ ४ ॥
पित्तकुष्ठपरीसर्पपिटिकादाहतृड्भ्रमान् ।
कण्डूपाण्ड्वामयान् गण्डान् दुष्टनाडीव्रणापचीः ॥ ५ ॥
विस्फोटविद्रधीगुल्मशोफोन्मादमदानपि ।
हृद्रोगतिमिरव्यङ्गग्रहणीश्वित्रकामलाः ॥ ६ ॥
भगन्दरमपस्मारमुदरं प्रदरं गरम् ।
अर्शोऽस्रपित्तमन्यांश्च
सुकृच्छ्रान् पित्तजान् गदान् ॥ ७ ॥
सप्तच्छदः पर्पटकः शम्याकः कटुका वचा ।
त्रिफला पद्मकं पाठा रजन्यौ सारिवे कणे ॥ ८ ॥
निम्बचन्दनयष्ट्याह्वविशालेन्द्रयवामृताः ।
किराततिक्तकं सेव्यं वृषो मूर्वा शतावरी ॥ ९ ॥

पटोलातिविषामुस्तात्रायन्तीधन्वयासकम् ।
तैर्जलेऽष्टगुणे सर्पिर्द्विगुणामलकीरसे ॥ १० ॥
सिद्धं तिक्तान्महातिक्तं गुणैरभ्यधिकं मतम् ।
कफोत्तरे घृतं सिद्धं निम्बसप्ताह्वचित्रकैः ॥ ११ ॥
कुष्ठोषणवचाशालप्रियालचतुरङ्गुलैः ।
सर्वेषु चारुष्करजं तौवरं सार्षपं पिबेत् ॥ १२ ॥
स्नेहं घृतं वा कृमिजित्पथ्याभल्लातकैः शृतम् ।
आरग्वधस्य मूलेन शतकृत्वः शृतं घृतम् ॥ १३ ॥
पिबन्कुष्ठं जयत्याशु भजन् सखदिरं जलम् ।
एभिरेव यथास्वं च स्नेहैरभ्यञ्जनं हितम् ॥ १४ ॥
स्निग्धस्य शोधनं योज्यं विसर्पे यदुदाहृतम् ।
ललाटहस्तपादेषु सिराश्चास्य विमोक्षयेत् ॥ १५ ॥
प्रच्छानमल्पके कुष्ठे शृङ्गाद्याश्च यथायथम् ।
स्नेहैराप्याययेच्चैनं कुष्ठघ्नैरन्तरान्तरा ॥ १६ ॥
मुक्तरक्तविरिक्तस्य रिक्तकोष्ठस्य कुष्ठिनः ।
प्रभञ्जनस्तथा ह्यस्य न स्याद्देहप्रभञ्जनः ॥ १७ ॥

वासामृतानिम्बवरापटोल-
व्याघ्रीकरञ्जोदककल्कपक्वम् ।
सर्पिर्विसर्पज्वरकामलास्र-
कुष्ठापहं वज्रकमामनन्ति ॥ १८ ॥
त्रिफलात्रिकटुद्विकण्टकारि-
कटुकाकुम्भनिकुम्भराजवृक्षैः ।

सवचातिविषाग्निकैः सपाठैः
पिचुभागैर्नववज्रदुग्धमुष्ट्या ॥ १९ ॥
पिष्टैः सिद्धं सर्पिषः प्रस्थमेभिः
क्रूरे कोष्ठे स्नेहनं रेचनं च ।
कुष्ठश्वित्रप्लीहमर्ध्माश्मगुल्मान्
हन्यात्कृच्छ्रांस्तन्महावज्रकाख्यम् ॥ २० ॥
वन्यावकमर्पां द्रोणे पक्त्वा तेन घृतं पचेत् ।
धामार्गवपले पीतं तदूर्ध्वाधो विशुद्धिकृत् ॥ २१ ॥
आवर्तकीतुलां द्रोणे पचेदष्टांशशेषितम् ।
तन्मूलैस्तत्र निर्यूहे घृतप्रस्थं विपाचयेत् ॥ २२ ॥
पीत्वा तदेकदिवसान्तरितं सुजीर्णे
भुञ्जीत कोद्रवसुसंस्कृतकाञ्जिकेन ।
कुष्ठं किलासमपचीं च विजेतुमिच्छन्
इच्छन्प्रजां च विपुलां ग्रहणं स्मृतिं च ॥ २३ ॥
यतेर्लैलीतकवसा क्षौद्रजातीरसान्विता ।
कुष्ठघ्नी समसर्पिर्वा सगायस्त्यसनोदका ॥ २४ ॥
शालयो यवगोधूमाः कोरदूषाः प्रियङ्गवः ।
मुद्गा मसूरास्तुवरी तिक्तशाका ने जाङ्गलम् ॥ २५ ॥
वरापटोलखदिरनिम्बारुष्करयोजितम् ।
मद्यान्यौषधगर्भाणि मथितं चेक्षुराजिमत् ॥ २६ ॥
अन्नपानं हितं कुष्ठे नत्वम्ललवणोषणम् ।

दधिदुग्धगुडानूपतिलमाषांस्त्यजेत्तराम् ॥ २७ ॥

पटोलमूलत्रिफलाविशालाः
　पृथक्त्रिभागापचितत्रिशाणाः।
स्युस्त्रायमाणा कटुरोहिणी च
　भागार्धिके नागरपादयुक्ते ॥ २८ ॥
एतत्पलं जर्जरितं विपक्वं
　जले पिबेद्दोषविशोधनाय।
जीर्णे रसैर्धन्वमृगद्विजानां
　पुराणशाल्योदनमाददीत ॥ २९ ॥
कुष्ठं किलासं ग्रहणीप्रदोष-
　मर्शांसि कृच्छ्राणि हलीमकं च।
षड्रात्रियोगेन निहन्ति चैतद्
　हृद्बस्तिशूलं विषमज्वरं च ॥ ३० ॥
विडङ्गसारामलकाभयानां
　पलत्रयं त्रीणि पलानि कुम्भात्।
गुडस्य च द्वादश मासमेष
　जितात्मनां हन्त्युपयुज्यमानः ॥ ३१ ॥
कुष्ठं श्वित्रं श्वासकासोदरार्शो-
　मेहप्लीहग्रन्थ्यरुग्जन्तुगुल्मान्।
सिद्धं योगं प्राह यक्षो मुमुक्षो-
　र्भिक्षोः प्राणान्माणिभद्रः किलेमम् ॥ ३२ ॥

भूनिम्बनिम्बत्रिफलापद्मकातिविषाकणाः ।
मूर्वापटोलीद्विनिशापाठातिक्तेन्द्रवारुणीः ॥ ३३ ॥
सकलिङ्गवचास्तुल्या द्विगुणाश्च यथोत्तरम् ।
लिह्याद्दन्तीत्रिवृद्ब्राह्मीश्चूर्णिता मधुसर्पिषा ॥ ३४ ॥
कुष्ठमेहप्रसुप्तीनां परमं स्यात्तदौषधम् ।
वराविडङ्गकृष्णा वा लिह्यात्तैलाज्यमाक्षिकैः ॥ ३५ ॥
काकोदुम्बरिकावेल्लनिम्बाब्दव्योषकल्कवान् ।
हन्ति वृक्षकनिर्यूहः पानात्सर्वांस्त्वगामयान् ॥ ३६ ॥
कुटजाग्निनिम्बनृपतरुखदिरासनसप्तपर्णनिर्यूहे ।
सिद्धा मधुघृतयुक्ताः कुष्ठघ्नीर्भक्षयेदभयाः ॥ ३७ ॥
दार्वीखदिरनिम्बानां त्वक्क्वाथः कुष्ठसूदनः ।

निशोत्तमानिम्बपटोलमूल-
तिक्तावचालोहितयष्टिकाभिः ।
कृतः कषायः कफपित्तकुष्ठं
सुसेवितो घर्म इवोच्छिनत्ति ॥ ३८ ॥
एभिरेव च शृतं घृतमुख्यं
भेषजैर्जयति मारुतकुष्ठम् ।
कल्पयेत्खदिरनिम्बगुडूची-
देवदारुरजनीः पृथगेवम् ॥ ३९ ॥
पाठादार्वीवह्निघुणेष्टाकटुकाभि-
र्मूत्रं युक्तं शक्रयवैश्चोष्णजलं च ।

कुष्ठी पीत्वा मासमरुक् स्याद्गुदकीली
मेही शोफी पाण्डुरजीर्णी कृमिमांश्च ॥ ४० ॥

लाक्षादन्तीमधुरसवराद्वीपिपाठाविडङ्ग
प्रत्यक्पुष्पीत्रिकटुरजनीसप्तपर्णाटरूषम् ।
रक्ता निम्बं सुरतरुकृतं पञ्चमूल्यौ च चूर्णं
पीत्वा मासं जयति हितभुग्गव्यमूत्रेण कुष्ठम् ॥ ४१ ॥

निशाकणानागरवेल्लतौवरं
सवह्निताप्यं क्रमशो विवर्धितम् ।
गवाम्बुपीतं वटकीकृतं तथा
निहन्ति कुष्ठानि सुदारुणान्यपि ॥ ४२ ॥

त्रिकटूत्तमातिलारुष्करराज्य-
माक्षिकसितोपला विहिता ।
गुलिका रसायनं स्यात्
कुष्ठजिच्च वृष्या च सप्तसमा ॥ ४३ ॥

चन्द्रशकलाग्निरजनी-
विडङ्गतुवरास्थ्यरुष्करत्रिफलाभिः ।
वटका गुडांशक्लृप्ताः
समस्तकुष्ठानि नाशयन्त्यभ्यस्ताः ॥ ४४ ॥

विडङ्गभल्लातकबाकुचीनां
सद्वीपिवाराहिहरीतकीनाम् ।
सलाङ्गलीकृष्णतिलोपकुल्या
गुडेन पिण्डी विनिहन्ति कुष्ठम् ॥ ४५ ॥

शशाङ्कलेखा सविडङ्गमूला
सपिप्पलीका सहुताशमूला ।
सायोमला सामलका सतैला
कुष्ठानि कृच्छ्राणि निहन्ति लीढा ॥ ४६ ॥
पथ्यातिलगुडैः पिण्डी कुष्ठं सारुष्करैर्जयेत् ।
गुडारुष्करजन्तुघ्नसोमराजीकृताऽथवा ॥ ४७ ॥
विडङ्गाद्रिजतुक्षौद्रसर्पिष्मत्खादिरं रजः ।
किटिभश्वित्रदद्रुघ्नं खादेन्मितहिताशनः ॥ ४८ ॥
सितातैलकृमिघ्नानि धात्र्ययोमलपिप्पलीः ।
लिहानः सर्वकुष्ठानि जयत्यतिगुरूण्यपि ॥ ४९ ॥
मुस्तं व्योषं त्रिफला मञ्जिष्ठा दारु पञ्चमूले द्वे ।
सप्तच्छदनिम्बत्वक् सविशाला चित्रको मूर्वा ॥ ५० ॥
चूर्णं तर्पणभागैर्नवभिः संयोजितं समध्वंशम् ।
नित्यं कुष्ठनिबर्हणमेतत्प्रायोगिकं खादन् ॥ ५१ ॥
श्वयथुं सपाण्डुरोगं श्वित्रं ग्रहणीप्रदोषमर्शांसि ।
बध्मभगन्दरपिडकाकण्डूकोठापचीर्हन्ति ॥ ५२ ॥
रसायनप्रयोगेण तुवरास्थीनि शीलयेत् ।
भल्लातकं वाकुचिकां वह्निमूलं शिलाह्वयम् ॥ ५३ ॥
इति दोषे विजितेऽन्तस्
त्वक्स्थे शमनं बहिः प्रलेपादि हितम् ।
तीक्ष्णालेपोत्क्लिष्टं
कुष्ठं हि विवृद्धिमेति मलिने देहे ॥ ५४ ॥

स्थिरकठिनमण्डलानां कुष्ठानां पोटलैर्हितः स्वेदः।
स्विन्नोत्सन्नं कुष्ठं शस्त्रैर्लिखितं प्रलेपनैर्लिम्पेत् ॥ ५५ ॥
येषु न शस्त्रं क्रमते स्पर्शेन्द्रियनाशनेषु कुष्ठेषु।
तेषु निपात्यः क्षारो रक्तं दोषं च विस्राव्यम् ॥ ५६ ॥
लेपोऽतिकठिनपरुषे सुप्ते कुष्ठे स्थिरे पुराणे च।
पीतागदस्य कार्यो विषैः समन्त्रोऽगदैश्चानु ॥ ५७ ॥
स्तब्धानि सुप्तसुप्तान्यस्वेदनकण्डुलानि कुष्ठानि।
घृष्टानि शुष्कगोमयफेनकशस्त्रैः प्रदेह्यानि ॥ ५८ ॥
मुस्तात्रिफलामदनं करञ्ज आरग्वधकलिङ्गयवाः।
ससाह्वकुष्ठफलिनीदार्व्यःसिद्धार्थकं स्नानम् ॥ ५९ ॥
एष कषायो वमनं विरेचनं वर्णकरस्तथोद्वर्षः।
त्वग्दोषकुष्ठशोफप्रबाधनः पाण्डुरोगघ्नः ॥ ६० ॥
करवीरनिम्बकुटजाच्छम्याकाच्चित्रकाच्च मूलानाम्।
मूत्रे दर्वीलेपी क्वाथो लेपेन कुष्ठघ्नः ॥ ६१ ॥
श्वेतकरवीरमूलं कुटजकरञ्जात्फलं त्वचो दार्व्याः।
सुमनःप्रवालयुक्तो लेपः कुष्ठापहः सिद्धः ॥ ६२ ॥
सैरीषी त्वक् पुष्पं कार्पास्या राजवृक्षपत्राणि।
पिष्टा च काकमाची चतुर्विधः कुष्ठहा लेपः ॥ ६३ ॥
व्योषसर्षपनिशागृहधूमै-
र्यावशूकपटुचित्रकुष्ठैः।

---

२ 'ने परु' इति पाठः. २ 'स्तब्धातिसु' इति पाठः.

कोलमात्रगुटिकार्धविषांशाः
श्वित्रकुष्ठहरणो वरलेपः ॥ ६४ ॥
निम्बं हरिद्रे सुरसं पटोलं
कुष्ठाश्वगन्धे सुरदारु शिग्रुः ।
ससर्षपं तुम्बरुधान्यवन्यं
चण्डा[1] च चूर्णानि समानि कुर्यात् ॥ ६५ ॥
तैस्तक्रपिष्टैः प्रथमं शरीरं
तैलाक्तमुद्वर्तयितुं यतेत ।
तेनास्य कण्डूपिटिकाः सकोठाः
कुष्ठानि शोफाश्च शमं व्रजन्ति ॥ ६६ ॥
मुस्तामृतासङ्गकटङ्कटेरी-
कासीसकम्पिल्लककुष्ठरोध्राः ।
गन्धोपलः सर्जरसो विडङ्गं
मनःशिलाले करवीरकत्वक् ॥ ६७ ॥
तैलाक्तगात्रस्य कृतानि चूर्णा-
न्येतानि दद्यादवचूर्णनार्थम् ।
दद्रुः सकण्डूः किटिभानि पामा
विचर्चिका चेति तथा न सन्ति ॥ ६८ ॥
स्नुग्गण्डे सर्षपात्कल्कः कुकूलानलपाचितः ।
लेपाद्विचर्चिकां हन्ति रागवेग इव त्रपाम् ॥ ६९ ॥

---

१ 'ण्डावचू' इति पाठः.

मनःशिलाले मरिचानि तैल-
माकं पयः कुष्ठहरः प्रदेहः।
तथा करञ्जप्रपुनाटबीजं
कुष्ठान्वितं गोसलिलेन पिष्टम्॥ ७०॥
गुग्गुलुमरिचविडङ्गैः सर्षपकासीससर्जरसमुस्तैः।
श्रीवेष्टकालगन्धैर्मनःशिलाकुष्ठकम्पिल्लैः॥ ७१॥
उभयहरिद्रासहितैश्चाक्रिकतैलेन मिश्रितैरेभिः।
दिनकरकराभितप्तैः कुष्ठं घृष्टं च नष्टं च॥ ७२॥
मरिचं तमालपत्रं कुष्ठं समनःशिलं सकासीसम्।
तैलेन युक्तमुषितं सप्ताहं भाजने ताम्रे॥ ७३॥
तेनालिप्तं सिध्मं सप्ताहाद्धर्मसेविनोपैति।
मासाज्जवं किलासं स्नानेन विना विशुद्धस्य॥ ७४॥
मयूरकक्षारजले सप्तकृत्वः परिस्रुते।
सिद्धं ज्योतिष्मतीतैलमभ्यङ्गात्सिध्मनाशनम्॥ ७५॥
वायसजङ्घामूलं वमनीपत्राणि मूलकाद्बीजम्।
तक्रेण भौमवारे लेपः सिध्मापहः सिद्धः॥ ७६॥
जीवन्ती मञ्जिष्ठा दार्वी कम्पिल्लकं पयस्तुत्थम्।
एष घृततैलपाकः सिद्धः सिद्धे च सर्जरसः॥ ७७॥
देयः समधूच्छिष्टो विपादिका तेन नश्यति ह्यक्ता।
चर्मैककुष्ठकिटिभं कुष्ठं शाम्यत्यलसकं च॥ ७८॥
मूलं लसाह्वारग्वधशिरीषाश्वमारा-
र्कास्फोताक्षिवकास्फोतनिम्बात्[illegible]।

बीजं कारञ्जं सार्षपं प्रापुनाटं
श्रेष्ठा जन्तुघ्नं त्र्यूषणं द्वे हरिद्रे ॥ ७९ ॥
तैलं तैलं साधितं तैः समूत्रै-
स्त्वग्दोषाणां दुष्टनाडीव्रणानाम् ।
अभ्यङ्गेन श्लेष्मवातोद्भवानां
नाशायालं वज्रकं वज्रतुल्यम् ॥ ८० ॥
एरण्डतार्क्ष्यघननीपकदम्बभार्ङ्गी-
कम्पिल्लवेल्लफलिनीसुरवारुणीभिः ।
निर्गुण्ड्यरुष्करसुराह्वसुवर्णदुग्धा-
श्रीवेष्टगुग्गुलुशिलापटुतालकविश्वैः ॥ ८१ ॥
तुल्यस्नुगर्कदुग्धं सिद्धं तैलं स्मृतं महावज्रम् ।
अतिशयितवज्रकगुणं श्वित्रार्शोग्रन्थिमालाघ्नम् ॥ ८२ ॥
कुष्ठाश्वमारभृङ्गार्कमूत्रस्नुक्क्षीरसैन्धवैः ।
तैलं सिद्धं विषावापमभ्यङ्गात्कुष्ठजित्परम् ॥ ८३ ॥
सिद्धं सिक्थकसिन्दूरपुरतुत्थकतार्क्ष्यजैः ।
कच्छूं विचर्चिकां चाऽऽशु कटुतैलं नियच्छति ॥ ८४ ॥
लाक्षा व्योषं प्रापुनाटं च बीजं
सश्रीवेष्टं कुष्ठसिद्धार्थकाश्च ।
तक्रोन्मिश्रः स्याद्धरिद्रा च लेपो
दद्रूघ्नोक्तो मूलकोत्थं च बीजम् ॥ ८५ ॥
चित्रकसोभाञ्जनकौ गुडूच्यपामार्गदेवदारूणि ।

---

१ 'तिलतैलं' इति पाठः. २ 'चाशु क' इति पाठः.

खदिरो धवश्च लेपः श्यामा दन्ती द्रवन्ती च ॥ ८६ ॥
काक्षारसाञ्जनैलाः पुनर्नवा चेति कुष्ठिनां लेपाः ।
दधिमण्डयुताः पादैः षट् प्रोक्ता मारुतकफघ्नाः ॥ ८७ ॥
जलवाप्यलोहकेसरपत्रप्लवचन्दनमृणालानि ।
भागोत्तराणि सिद्धं प्रलेपनं पित्तकफकुष्ठे ॥ ८८ ॥
तिक्तघृतैर्धौतघृतैरभ्यङ्गो दह्यमानकुष्ठेषु ।
तैलैश्चन्दनमधुकप्रपौण्डरीकोत्पलयुतैश्च ॥ ८९ ॥
क्लेदे प्रपतति चाङ्गे दाहे विस्फोटके च चर्मदले ।
शीताः प्रदेहसेका व्यधनविरेकौ घृतं तिक्तम् ॥ ९० ॥
खदिरवृषनिम्बकुटजाः
श्रेष्ठा कृमिजित्पटोलमधुपर्ण्यः ।
अन्तर्बहिः प्रयुक्ताः
कृमिकुष्ठनुदः सगोमूत्राः ॥ ९१ ॥
वातोत्तरेषु सर्पिर्वमनं श्लेष्मोत्तरेषु कुष्ठेषु ।
पित्तोत्तरेषु मोक्षो रक्तस्य विरेचनं चाग्र्यम् ॥ ९२ ॥
ये लेपाः कुष्ठानां युज्यन्ते निर्हृतास्रदोषाणाम् ।
संशोधिताशयानां सद्यः सिद्धिर्भवति तेषाम् ॥ ९३ ॥
दोषे हृतेऽपनीते रक्ते बाह्यान्तरे कृते शमने ।
स्नेहे च कालयुक्ते न कुष्ठमतिवर्तते साध्यम् ॥ ९४ ॥
बहुदोषः संशोध्यः कुष्ठी बहुशोऽनुरक्षता प्राणान् ।
दोषे ह्यतिमात्रहृते वायुर्हन्यादबलमाशु ॥ ९५ ॥

पक्षात्पक्षाच्छर्दनान्यभ्युपेया-
न्मासान्मासाच्छोधनान्यप्यधस्तात् ।
शुद्धिर्मूर्ध्नि स्यात्त्रिरात्रात्त्रिरात्रात्
षष्ठे षष्ठे मास्यसृङ्मोक्षणं च ॥ ९६ ॥
यो दुर्वान्तो दुर्विरिक्तोऽथवा स्यात्
कुष्ठी दोषैरुद्धतैर्व्याप्यतेऽसौ ।
निःसन्देहं यात्यसाध्यत्वमेवं
तस्मात्कृत्स्नान्निर्हरेदस्य दोषान् ॥ ९७ ॥
व्रतदमयमसेवात्यागशीलाभियोगो
द्विजसुरगुरुपूजा सर्वसत्त्वेषु मैत्री ।
शिवशिवसुततारा भास्कराराधनानि
प्रकटितमलपापं कुष्ठमुन्मूलयन्ति ॥ ९८ ॥"

---

## विंशोऽध्यायः ।

अथातः श्वित्रकृमिचिकित्सितं व्याख्यास्यामः ।
इति ह स्माहुरात्रेयादयो महर्षयः ।

### [ अथ श्वित्ररोगचिकित्सितम् । ]

"कुष्ठादपि बीभत्सं यच्छीघ्रतरं च यात्यसाध्यत्वम् ।
श्वित्रम्, अतस्तच्छान्त्यै यतेत भवने यथा दीप्ते ॥ १ ॥

---

१ 'सृङ्मोक्षणानि' इति क्वचित्. २ 'दीप्ते यथा भवने' इति पदव्यत्यासः क्वचित्.

संशोधनं विशेषात्प्रयोजयेत्पूर्वमेव देहस्थं ।
श्वित्रे स्रंसनमग्र्यं मलयूरस इष्यते सगुडः ॥ २ ॥
तं पीत्वाऽभ्यक्ततनुर्यथाबलं सूर्यपादसन्तापम् ।
सेवेत विरिक्ततनुस्त्र्यहं पिपासुः पिबेत्पेयाम् ॥ ३ ॥
श्वित्रेऽङ्गे ये स्फोटा जायन्ते कण्टकेन तान् भिन्द्यात् ।
स्फोटेषु निस्रुतेषु तु प्रातः प्रातः पिबेत् त्रिदिनम् ॥ ४ ॥
मलयमसनं प्रियङ्गुं शतपुष्पां चाम्भसा समुत्क्वाथ्य ।
पालाशं वा क्षारं यथाबलं फाणितोपेतम् ॥ ५ ॥
कल्वक्षवृक्षवल्कलनिर्यूहेणेन्दुराजिकाकल्कम् ।
पीत्वोष्णस्थितस्य जाते स्फोटे तक्रेण भोजनं
निर्लवणम् ॥ ६ ॥

गव्यं मूत्रं चित्रकव्योषयुक्तं
सर्पिःकुम्भे स्थापितं क्षौद्रमिश्रम् ।
पक्षादूर्ध्वं श्वित्रिभिः पेयमेतत्
कार्यं चास्मै कुष्ठदिष्टं[1] विधानम् ॥ ७ ॥

मार्कवमथवा खादेद्भृष्टं तैलेन लोहपात्रस्थम् ।
बीजकशृतं च दुग्धं तदनुपिबेच्छ्वित्रनाशाय ॥ ८ ॥

पूतीकार्कव्याधिघातस्नुहीनां
मूत्रे पिष्टाः पल्लवा जातिजाश्च ।
घ्नन्त्यालेपाच्छ्वित्रदुर्नामदद्रू-
पामाकोठान्[2] दुष्टनाडीव्रणांश्च ॥ ९ ॥

---

१ 'दृष्टं वि' इति पाठः. २ 'कोष्ठान् दुष्ट' इति पाठः.

द्वैपं दग्धं चर्म मातङ्गजं वा
श्वित्रे लेपस्तैलयुक्तो वरिष्ठः ।
पूतिःकीटो राजवृक्षोद्भवेन
क्षारेणाक्तः श्वित्रमेकोऽपि हन्ति ॥ १० ॥
रात्रौ गोमूत्रे [1]वासितान् जर्जराङ्गा-
नह्नि च्छायायां शोषयेत्स्फोटहेतून् ।
एवं वारांस्त्रींस्ततः श्लक्ष्णपिष्टैः
सुह्याः क्षीरेण श्वित्रनाशाय लेपः ॥ ११ ॥
अक्षतैलकृतो लेपः कृष्णसर्पोद्भवा मषी ।
शिखिपित्तं तथा दग्धं ह्रीबेरं वा तदाप्लुतम् ॥ १२ ॥
कुडवो वल्गुजबीजाद्धरितालचतुर्थभागसम्मिश्रः ।
मूत्रेण गवां पिष्टः सवर्णकरणं परं श्वित्रे ॥ १३ ॥
क्षारे सुदग्धे गजलिण्डजे च
गजस्य मूत्रेण परिस्रुते च ।
द्रोणप्रमाणे दशभागयुक्तं
दत्त्वा पचेद्बीजमवल्गुजानाम् ॥ १४ ॥
श्वित्रं जयेच्चिक्कणतां गतेन
तेन प्रलिम्पन्बहुशः प्रघृष्टम् ।
कुष्ठं [2]मषं वा तिलकालकं वा
यद्वा व्रणे स्यादधिमांसजातम् ॥ १५ ॥

---

१ 'चासितान्' इति पाठः. २ 'मषीं वा' इति पाठः.

भल्लातकद्वीपिसुधार्कमूलं
गुञ्जाफलत्र्यूषणशङ्खचूर्णम् ।
तुत्थं सकुष्ठं लवणानि पञ्च
क्षारद्वयं लाङ्गलिकां च पक्त्वा ॥ १६ ॥
स्नुगर्कदुग्धे घनमायसस्थं
शलाकया तद्विदधीत लेपम् ।
कुष्ठे किलासे तिलकालकेषु
मषेषु[1] दुर्नामसु चर्मकीले ॥ १७ ॥

शुद्ध्या शोणितमोक्षैर्विरूक्षणैर्भक्षणैश्च सक्तूनाम् ।
श्वित्रं कस्यचिदेव प्रशाम्यति क्षीणपापस्य ॥ १८ ॥

[ अथ क्रिमिरोगचिकित्सितम् । ]

स्निग्धस्विन्ने गुडक्षीरमत्स्याद्यैः क्रिमिणोदरे ।
उत्क्लेशितक्रिमिकफे शर्वरीं तां सुखोषिते ॥ १९ ॥
सुरसादिगणं मूत्रे क्वाथयित्वार्धवारिणि ।
तं कषायं कणागालक्रिमिजित्कल्कयोजितम् ॥ २० ॥
सतैलस्वर्जिकाक्षारं युञ्ज्याद्बस्तिं, ततोऽहनि ।
तस्मिन्नेव निरूढं तं पाययेत विरेचनम् ॥ २१ ॥
त्रिवृत्कल्कं फलकणाकषायालोडितं ततः ।
ऊर्ध्वाधः शोधिते कुर्यात्पञ्चकोलयुतं क्रमम् ॥ २२ ॥
कटुतिक्तकषायाणां कषायैः परिषेचनम् ।
काले विडङ्गतैलेन ततस्तमनुवासयेत् ॥ २३ ॥

---

१ 'मांसेषु' इति पाठः.

शिरोरोगनिषेधोक्तमाचरेन्मूर्धगेष्वनु ।
उद्रिक्ततिक्तकटुकमल्पस्नेहं च भोजनम् ॥ २४ ॥
विडङ्गकृष्णामरिचपिप्पलीमूलशिग्रुभिः ।
पिबेत्ससर्जिकाक्षारां यवागूं तक्रसाधिताम् ॥ २५ ॥
रसं शिरीषकिणिहीपारिभद्रककेम्बुकात् ।
पलाशबीजपत्तूरपूतीकाद्वा पृथक् पिबेत् ॥ २६ ॥
सक्षौद्रं सुरसादीन्वा लिह्यात्क्षौद्रयुतान् पृथक् ।
शतकृत्वोऽश्वविट्चूर्णं विडङ्गक्वाथभावितम् ॥ २७ ॥
कृमिमान्मधुना लिह्याद्भावितं वा वरारसैः ।
शिरोगतेषु कृमिषु चूर्णं प्रधमनं च तत् ॥ २८ ॥
आखुपर्णीकिसलयैः सुपिष्टैः पिष्टमिश्रितैः ।
पक्त्वा पूपलिकां खादेद्धान्याम्लं च पिबेदनु ॥ २९ ॥
सपञ्चकोललवणमसान्द्रं तक्रमेव वा ।
नीपमार्कवनिर्गुण्डीपल्लवेष्वप्ययं विधिः ॥ ३० ॥
विडङ्गचूर्णमिश्रैर्वा पिष्टैर्भक्ष्यान् प्रकल्पयेत् ।
विडङ्गतण्डुलैर्युक्तमर्धांशैरातपस्थितम् ॥ ३१ ॥
दिनमारुष्करं तैलं पाने बस्तौ च योजयेत् ।
सुराह्वसरलस्नेहं पृथगेवं प्रकल्पयेत् ॥ ३२ ॥
पुरीषजेषु सुतरां दद्याद्वस्तिविरेचने ।
शिरोविरेकं वमनं शमनं कफजन्मसु ॥ ३३ ॥

---

१ 'पूतिका' इति पाठः. २ 'आखुकर्णी' इति पाठः.

